अखिलभारतीय–प्राच्यविद्यासम्मेलनम्

शतवर्षमहोत्सवग्रन्थमाला–४३

# पञ्चलक्षणी

## (गादाधरीव्याप्तिपञ्चकप्रकरणम्)

संपादनम्

प्रा. वीरनारायणः पाण्डुरंगी

प्रधानसंपादकः

आचार्यः श्रीनिवासः वरखेडी

कुलगुरु

संपादकः

आचार्यः मधुसूदनः पेन्ना

संचालकः संशोधन–प्रकाशनविभागः




कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः

रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

तथा



न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – 43

# पञ्चलक्षणी

## (गादाधरीव्याप्तिपञ्चकप्रकरणम्)

संपादनम् – प्रा. वीरनारायणः पाण्डुरंगी

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः




कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं
न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

शीर्षकम् — **पञ्चलक्षणी**

संपादनम् — प्रा. वीरनारायणः पाण्डुरंगी

प्रधानसंपादकः — आचार्यः श्रीनिवासः वरखेडी
कुलगुरु, क.का.सं.वि., रामटेकम्

संपादकः — आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः
क.का.सं.वि., रामटेकम्

संपादकमण्डलम् — डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक
डॉ. वीना गाणु, नागपुर.

प्रकाशनवर्षम् — २०२०

आवृत्तिः — प्रथमा

मूल्यम् — 145.00

आय.एस.बी.एन. — 9788183154216

मुखपृष्ठम् — श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्

प्रकाशकः — कुलसचिवः,
कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,
प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.

एवं

न्यू भारतीय बुक कॉरपोरेशन
२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,
४७३५/२२, अंसारी रोड, दरिया गंज,
नई दिल्ली – ११०००२
फोन नं. : २३२८०२१४, २३२८०२०९



एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU

## Kavikulaguru Kalidas Sanskrit University
## All India Oriental Conference

**100th Year 50th Session**
**10th-12th January, 2020**

### Chief Patron
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

### Patron
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

### AIOC President
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

### AIOC General Secretary
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

### AIOC Local Secretary
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

### Additional Local Secretary
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

### Organising Committee
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek

Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

। श्रीगुरुराजो विजयते ।

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।

# अथ गादाधरीव्याप्तिपञ्चकप्रकरणम्

## प्रथमलक्षणम्

### चिन्तामणिः

**नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः? न तावद-व्यभिचारितत्वम्, तद्धि न साध्याभाववदवृत्तित्वं, साध्य-वद्भिन्नसाध्याभाववदवृत्तित्वं, साध्यवत्प्रतियोगिकान्योन्या-भावासामानाधिकरण्यं, सकलसाध्याभाववन्निष्ठाभाव प्रतियोगित्वं, साध्यवदन्यावृत्तित्वं वा, केवलान्वयिन्यभावात् ।**

### दीधितिः

**समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रतिपा-दननिदानं व्याप्तिस्वरूपनिरूपणमारभते- नन्वित्यादिना ।**

अनुमानप्रामाण्योपपादकतया व्याप्तिग्रहोपायस्यैवेदानीमभिधातुम् उचितत्वात् 'वक्ष्यते' इत्यनेन तत्प्रतीक्षां विधाय व्याप्तिस्वरूपनिरूपणमयुक्त-मित्याशङ्कां परिजिहीर्षुस्तत्प्राथम्ये तस्य व्याप्तिग्रहोपायप्रतिपादनौप-यिकत्वरूपबीजं दर्शयन् 'नन्वित्यादि' ग्रन्थमवतारयति- **समारब्धेति** । व्याप्ति-ग्रहोपायाकथनेन प्रामाण्यव्यवस्थापनस्यानिष्पन्नत्वात् '**समारब्धेति**' परीक्षा-

विशेषणम्। परीक्षा= परमतनिराकरणपूर्वकस्वमतव्यवस्थापनम्। 'कारणी-भूतेति' प्रतिपादनविशेषणम्।

यद्यपि व्याप्तिग्रहोपायप्रतिपादनस्यानुमानप्रामाण्य व्यवस्थापकत्वकथनं न तस्यावश्यकत्वप्रदर्शनाय, 'व्याप्तिग्रहोपायश्च वक्ष्यते' इत्येतद्ग्रन्थावतारणाद् व्याप्तिग्रहोपायस्यानुमान प्रामाण्योपपादकतालाभेनैव तल्लाभात्, तथापि प्रामाण्यव्यवस्थापन निर्वाहकतया भवतु व्याप्तिग्रहोपायस्येदानीमाकाङ्क्षितत्वम्, एवमपि तन्न व्याप्तिस्वरूपनिरूपणं विना संभवतीति प्रथमत एव तदेवोचितमित्येतत्सूचनायैतदभिहितम्। **निदानमिति**। व्याप्तिघटकी-भूताव्यभिचारांशभाने बाधाभावमुद्रया व्यभिचारज्ञानाभावो हेतुः। साध्यसमानाधिकरणवृत्ति हेतुतावच्छेदकांशग्रहे च विशेषणज्ञानमुद्रया सहचारग्रहो हेतुरिति क्रमेण व्याप्तिग्रहोपायप्रतिपादनस्य व्याप्तिस्वरूपमप्रतिपाद्याशक्यत्वादिति भावः। प्रथमतः पूर्वक्षस्यैवाभिधानेन निरूपयतीत्यसङ्गतमत आरभत इत्युक्तम्, निरू-पणस्य परमतनिराकरणपूर्वकस्वसिद्धान्तकथनरूपतया पूर्वपक्षाभिधान तत्खण्डनयोरपि तदारम्भतेति ध्येयम्।

मूले **न तावदव्यभिचारितत्वमिति**। 'व्याप्तिरिति' प्रश्नस्थमनुषज्यते। तथा चाव्यभिचारपदार्थो नानुमितिजनकज्ञान विषय इत्यर्थः। अनुमितिजनकत्वं नाव्यभिचारपदार्थावच्छिन्नहेतु विषयताघटितधर्म◌ावच्छिन्नमिति तु पर्यवसितम्। अत्र हेतुमाह- **तद्धि न साध्यभाववदवृत्तित्वमित्यादि**। हि यतः **साध्याभाव-वदवृत्तित्वादिरूपं तत्** अव्यभिचरितत्वं न व्याप्तिरित्यनुषङ्गेणान्वयः। तथा च साध्याभाववदवृत्तित्वादिरूपा ये येऽव्यभिचारपदार्थास्त त्तदवच्छिन्नहेतुविषयता-घटितधर्मावच्छिन्नत्वाभावकूटवत्त्वादिति निरुक्तपर्यवसितसामान्याभावसाधकः फलितो हेतुः।

न चाप्रयोजकत्वम्, विशेषाभावकूटस्य सामान्याभावव्याप्य तायामविवादात्। अत्र साध्याभाववदवृत्तित्वादिरूपा ये पञ्च

अव्यभिचारपदार्थास्तदव-च्छिन्नविषयताघटितधर्मानवच्छिन्नत्वकूटस्य प्रत्येकसाधकं हेतुं वक्ष्यति- **केवलान्वयिन्यभावादिति**। साध्येऽत्यन्ताभावाप्रतियोगित्व-अन्योन्याभावप्रति-योगितानवच्छेदक-त्वरूपकेवलान्वयित्वग्रहदशायाम् अत्यन्त-अन्योन्याभावयोः साध्य-तदवच्छिन्न[1]प्रतियोगिताकत्वभानासम्भवेन प्रतियोगितया साध्य-तदाश्रयविशेषितात्यन्त-अन्योन्याभाववदवृत्तित्वत्वावच्छिन्नविषय-तायास्तादृशदशाविशेषीयानुमितिजनकज्ञानेऽभावात् इत्यर्थः। एवञ्च तादृशविषयता-शून्यवृत्तित्वमेवानुमितिजनकतायां दर्शित साध्यसाधको हेतुरभिमत इति नासिद्ध्यादिः। ईदृशदिशा अग्रिमहेतवोऽपि परिष्करणीयाः।

[तथा चेदमनुमानं पर्यवसितम्- "अनुमितिजनकं परामर्शरूपं ज्ञानं न अव्यभिचाररूपव्याप्तिविषयकं, साध्याभाववदवृत्तित्वादिरूपाव्यभिचारपदार्थविशेषविषयकत्वाभावकूट वत्त्वात्"। अथ वा "परामर्शनिष्ठम् अनुमितिजनकत्वम् अव्यभिचारपदार्थावच्छिन्नहेतुविषयताघटितधर्मावच्छिन्नं न[2], साध्याभावव-दवृत्तित्वादिरूपाव्यभिचारपदार्थावच्छिन्नहेतुविषयता घटितधर्मावच्छिन्नत्वाभाव-कूटवत्त्वात्"।

न चाप्रयोजकत्वम्, विशेषाभावकूटस्य सामान्याभाव-व्याप्यतायामविवादात्। साध्येऽत्यन्ताभावाप्रतियोगित्व रूपस्य वा अन्योन्याभावप्रति-योगितानवच्छेदकत्वरूपस्य वा केवलान्वयित्वस्य ग्रहदशायाम् अत्यन्ताभावे साध्यप्रतियोगिकत्वस्य, अन्योन्याभावे

---

[1] साध्यवत्त्वावच्छिन्न रा.ता.

[2] अव्यभिचाररूपव्याप्तिविशिष्टहेतुविषयकपरामर्शत्वावच्छिन्नं न, किन्तु सिद्धान्तव्याप्तिविशिष्टहेतुविषयकपरामर्शत्वावच्छिन्नम् इति साध्यं पर्यवसितम्।

साध्यावच्छिन्नप्रतियोगिताकत्वस्य च भानासम्भवेन प्रतियोगितासंबन्धेन साध्यविशेषितात्यन्ताभाव(=साध्याभाव)-वदवृत्तित्वत्वावच्छिन्नविषयतायाः, प्रतियोगितया साध्याश्रयविशेषिता -न्याभाव(=साध्यवदन्योन्याभाव)वदवृत्तित्वत्वावच्छिन्नविषयतायाश्च केवला-न्वयित्वग्रहदशाविशेषीयानुमितिजनकपरामर्शेऽभावात्।

तथा चेदमनुमानं सिद्धं- "अनुमितिजनकं परामर्शरूपं ज्ञानम् साध्या-भाववदवृत्तित्वादिरूपाव्यभिचाररूपव्याप्तिविषयकं न, केवलान्वयिसाध्यका-नुमितिजनकत्वात्। अथ वा अनुमितिजनकत्वं साध्याभाववदवृत्तित्वादिरूपाव्यभिचारपदार्थावच्छिन्नहेतुविषयताघटित धर्मावच्छिन्नं न, साध्याभाव-वदवृत्तित्वादिरूपाव्यभिचारपदार्थ-विषयिताशून्य(सिद्धान्तव्याप्तिविषयकानुमितिजनकपरामर्श)वृत्तित्वात् "।]

## द्वितीयलक्षणम्
### दीधितिः

**साध्यभाववदवृत्तित्वस्याप्यव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमा-शङ्क्याह- साध्यवद्भिन्नेति। साध्यवद्भिन्ने यः साध्याभावस्तद्वदवृत्तित्वमर्थः।**

दीधितौ **अव्याप्येति**। कपिसंयोगी एतत्त्वादित्यादावित्यर्थः। **अव्याप्तीति**। तत्र हेत्वधिकरणे एतद्वृक्षादावप्यन्यदेशकालावच्छेदेन कपिसंयोगाद्यभाव-सत्त्वादिति भावः। साध्यवद्भिन्नो यः साध्याभाववानिति कर्मधारयेऽभेदसम्बन्धेन साध्यवद्भिन्नीयं यत् साध्याभावाधिकरणं तदवृत्तित्वमित्यर्थः स्यात्। तथा सति तद्घटकीभूतस्याभेदसम्बन्धेन साध्यवद्भिन्नीयं यत्तदवृत्तित्वस्यैव लक्षणत्वसंभवात् साध्याभाववत्त्वांशस्य वैयर्थ्यमतः सप्तमीतत्पुरुषं

व्याचष्टे- **साध्यवद्भिन्ने इति**। **तथा च साध्यवद्भिन्नवृत्तिर्यः साध्याभावस्तद्वद्वृत्तित्वमर्थः**। तत्र पूर्ववद्भेदेन साध्यवद्भिन्नपदार्थविशेषितधर्मिवृत्तित्वादेर्न घटकता, तादृशपदार्थस्य धर्मिण्यविशेषणत्वाद्[1], वृत्त्यादिविशेषणतयैव साध्यवद्भिन्नस्य निवेशादिति न साध्याभावांशवैयर्थ्यमिति भावः।

**साध्यपदप्रयोजनम्**

अभावे साध्यीयत्वानिवेशे ["वह्निमान् धूमात्" इत्यादौ] ह्रदादिवृत्ति-गगनाद्यभाववति पर्वतादौ धूमादेर्वृत्तेरसंभव इति तद्वारणाय साध्यपदसार्थक्यम्। न चाधिकरणभेदेनाभावभेदमत एवैतल्लक्षणकरणात्पर्वतादेर्न ह्रदादिवृत्त्यभाव-वत्त्वमिति वाच्यम्। अव्याप्यवृत्तिप्रतियोगिताकाभावस्य व्याप्यवृत्तित्व-अव्याप्य-वृत्तित्वादिरूपविरुद्धधर्माध्यासेन भेदस्य लक्षणकर्तृसंमतत्वात् आकाशाभावादेर्भेदकाभावेन तस्यैक्यात्। अत एव [संयोगाभावस्य प्रतियोग्यधिकरणीभूतद्रव्यवृत्तित्वप्रतियोग्यनधिकरणीभूतगुणवृत्तित्वयो-र्विरोधाभावात्] उक्तधर्माणां भेदकत्वम् 'एतानि च न भेदकानि'[2] इत्यनेन दीधितिकृन्निरा-करिष्यति।

---

[1] पदार्थविशेषितधर्म्यवृत्तित्वादेर्न घटकता रा.ता.

[2] संयोगाद्यभावस्य च द्रव्ये प्रतियोगिसामानाधिकरण्यमव्याप्यवृत्तित्वञ्च प्रतियोग्यधि-करणीभूतद्रव्यवृत्तित्वं स्वाधिकरणीभूतद्रव्यनिष्ठात्यन्ताभाव-प्रतियोगित्वम्। गुणे च प्रति-योग्यसामानाधिकरण्यं व्यप्यवृत्तित्वञ्च प्रतियोग्यनधिकरणीभूतगुणवृत्तित्वं स्वाधि-करणीभूतगुणनिष्ठान्त्यन्ताभावा-प्रतियोगित्वम्, एतानि च न भेदकानि, अविरोधात्। **व्याप्तिपूर्वपक्षदीधितिः** पृ.269.

[1]अथवा साध्याभावपदमनुयोगिताविशेषसम्बन्धेन साध्यीय-परम्, अभावीयविलक्षणानुयोगितालाभायैवाभावपदम्। न त्वभावत्वमपि निवेश्यते, प्रयोजनाभावात्। तादृशविलक्षणसम्बन्धेन यः साध्यीयस्तद्वद्वृत्तित्वमर्थः। [तथा च साध्यवद्भिन्नवृत्तिः अभावीयानुयोगितासंबन्धेन साध्यविशिष्टः यः (=अभावः) तद्वद्वृत्तित्वमिति लक्षणम्।] तत्र च साध्यस्य यत्पदार्थाविशेषणत्वे [साध्यवद्भिन्नवृत्तिः यः तद्वद्वृत्तित्वमितिमात्रं लक्षणं संपद्यते। तदा च] ह्रदादिवृत्तिप्रमेयत्वादिमति पर्वतादौ हेतोर्वृत्तेरसंभवः स्यादिति तन्निवेशः। [अनुयोगिताविशेषसम्बन्धेन इत्यत्र विशेषपदादाने[2] "पर्वतः वह्निसंयोगी धूमात्" इत्यत्र ह्रदादिवृत्ति-वह्निसंयोगानुयोगिदीर्घदण्डादिमत्पर्वतवृत्तित्वेन धूमे अव्याप्तिः। अनुयोगिता-विशेषश्चाभावीयानुयोगितैवेति न दोषः।]

**साध्याभावविशेषणे**

अत्र च साध्याभावः साध्यतावच्छेदकावच्छिन्न-प्रतियोगिताको बोध्यः, अन्यथा वह्निमान् धूमादित्यादौ ह्रदादिनिष्ठमहानसीयवह्नित्वाद्यवच्छिन्नप्रति-योगिताकवह्न्याद्यभावस्य धूमवति सत्त्वेन, [3]"[जलपदार्थः] पृथिवीत्वाभाव-द्रव्यत्वाभावान्यतरवान् जलत्वात्" इत्यादौ

---

[1] अधिकरणभेदेनाभावभेदमतेपि असंभवनिवारणायाह- अथवेति।

[2] संबन्धसाधारणानुयोगितानिवेशे साध्यवद्भिन्नवृत्तिप्रतियोगिकसमवायवति धूमस्य वृत्ते-रव्याप्तिः, अतो विशेषपदम् इति **कृष्णंभट्टः**। तादृशसमवायवद्वृत्तित्वस्य धूमे सत्त्वादव्याप्तिः स्यादतो विलक्षणेति इति **न्यायरत्नम्**।



[3] अधिकरणभेदेनाभावभेदमतेन स्थलान्तरानुसरणम्।

साध्यवद्भिन्नपृथिव्यादिनिष्ठस्य द्रव्यत्वाद्यात्मकस्य साध्यप्रतियोगिकाभावस्य जलादौ सत्त्वेन चाव्याप्त्यापत्तेः।

साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनापि प्रतियोगिता विशेषणीया, अन्यथा ह्रदादिवृत्तिसमवायादिसम्बन्धावच्छिन्न-प्रतियोगिताकवह्न्याद्यभावस्य धूमादिमत्यपि वृत्तेरसम्भवस्य, [1]कालिकसम्बन्धेन द्रव्यत्वाभावादौ साध्ये कालत्वादिहेतौ ["कालः कालिकसंबन्धेन द्रव्यत्वनिष्ठसमवायसंबन्धावच्छिन्न-प्रतियोगिताकाभाववान् कालत्वात्" इत्यत्र] साध्यवद्भिन्नपरमाणुगगनादि-वृत्तिदैशिकविशेषणतासम्बन्धावच्छिन्न-प्रतियोगिताकसाध्याभावात्मकद्रव्यत्वादे-र्हेत्वधिकरणवृत्तित्वेन अव्याप्तेर्वा प्रसङ्गः।

**साध्याभाववत्तानियामकसंबन्धनिरूपणम्**

अत्र च [साध्याभावनिष्ठाधेयतारूपायां] साध्याभाववत्तायां सम्बन्ध-विशेषावच्छिन्नत्वानिवेशे "वह्निमान् धूमात्" इत्यादौ ह्रदादिवृत्तिवह्न्याद्यभावस्य कालिकादिसम्बन्धेन पर्वतादौ वृत्तेरव्याप्तिः। दैशिकविशेषणताविशेषाव-च्छिन्नत्वनिवेशे कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावादौ दैशिक-विशेषणतया साध्ये आत्मत्वादिहेतौ ["आत्मा आकाशाभावनिष्ठ-कालिकसम्बन्धावच्छिन्नप्रतियोगिताको योभावो दैशिक-विशेषणतासंबन्धेन तद्वान्, आत्मत्वात्" इत्यत्र]



[1] अधिकरणभेदेनाभावभेदमतेन स्थलान्तरानुसरणम्।

साध्यवद्भिन्नकालादिवृत्तेराकाशाभावात्मक[1]-साध्याभावस्यात्मादिषु वृत्तेः। घटत्वाभावादिसाध्यकस्थले सद्धेतौ [पटः घटत्वाभाववान् पटत्वात् इत्यत्र] साध्याभावस्य घटत्वादेर्दैशिकविशेषणता-संबन्धेन अधिकरणतायां मानाभावेन चाव्याप्तिः। अतः साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताज्ञानं प्रति यादृशसम्बन्धेन स्वप्रकारक-निश्चयः प्रतिबन्धकस्तेन सम्बन्धेनाभाववत्त्वं निवेश्यम्। संयोगेन वह्न्यादौ साध्ये तादृशसम्बन्धो दैशिकविशेषणता। कालिकविशेषणतासम्बन्धेनाकाशाभावाभावे दैशिकविशेषणतया साध्ये कालिकसम्बन्ध एव तथा। समवायादिना घटत्वादेरभावे दैशिकविशेषणतया साध्ये समवायादिरेवेति न दोषः।

न चैवं [कपिसंयोगी एतद्वृक्षत्वात् इत्यत्र] वृक्षनिष्ठा या कपिसंयोगा-भावीयमूलावच्छिन्नविशेषणता तादृशसम्बन्धेन वृक्षादौ तादृशाभाववत्ताज्ञानेऽपि कपिसंयोगवत्ताज्ञानोत्पत्तेस्तादृशसम्बन्धो न लक्षणघटक इति [निरवच्छिन्न-विशेषणतासंबन्ध एव तादृशः, तादृशसंबन्धेन च कपिसंयोगाभाववान् न एतद्वृक्ष इत्यव्याप्त्यभावेन] साध्यवद्भिन्नवृत्तित्वविशेषणं व्यर्थमिति वाच्यम्। संयोगतदभावयोरविरुद्धत्वज्ञानाभावदशायां वृक्षः कपिसंयोगा-भाववानिति ज्ञानस्यापि वृक्षे कपिसंयोगवत्ता-ज्ञानविरोधितया

---

[1] आकाशाभावस्य अभावः आकाशाभावाभावः। आकाशाभावाभावस्य अभावस्तु आका-शाभाव एव, नातिरिक्तस्तृतीयः। अतो न आकाशाभाव-आकाशाभावाभावाभावयोस्सम-नैयत्याभावो बाधते।

अथ वा स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्न-स्वनिष्ठप्रतियोगि-ताकाभावस्य स्वप्रतियोगिरूपत्वमिति नियमानुसारेणैतत्।

वृक्षनिष्ठतदभावीयविशेषणताया अपि साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकीभूतसंसर्गताश्रयत्वात्।

**मथुरानाथीयः साध्याभाववत्तानियामकसंबन्धनिवेशप्रकारः**

केचित्तु साध्यात्मकाभावनिरूपितप्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्त्वं विवक्षितम्। स च सम्बन्धो यत्सम्बन्धावच्छिन्नप्रतियोगिताकः स्वाभावः साध्यमिति नोक्तानुपपत्तिः।

अथ समवायेन प्रमेयत्वावच्छिन्नसाध्यकद्रव्यत्वप्रकारकप्रमाविषयत्वादि-हेतुकस्थले ["घटः समवायेन प्रमेयवान्, द्रव्यत्वप्रकारकप्रमाविषयत्वात्" इत्यत्र] कालिकसम्बन्धस्यापि तत्सम्बन्धावच्छिन्नप्रतियोगिताकघटाभावरूप-प्रमेयनिरूपितप्रतियोगितावच्छेदकत्वात्तेन संबन्धेन साध्याभाववति काले हेतोर्वृत्तेरव्याप्तिः। न च साध्यनिरूपितस्वनिष्ठ-प्रतियोगितावच्छेदकसम्बन्ध-निवेशान्नायं दोषः, कालिक-सम्बन्धावच्छिन्नघटाभावादिरूपप्रमेयस्य कालिक-सम्बन्धावच्छिन्न-प्रतियोगिताया घटादावेव सत्त्वात् कालिकसम्बन्धस्य समवायसम्बन्धावच्छिन्नप्रमेयाभावात्मकस्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धत्व-विरहादिति वाच्यम्। तादृशप्रमेयाभावस्य कालिकसम्बन्धावच्छिन्न-प्रतियोगिताको योऽभावस्तस्यापि प्रमेयत्वेन साध्यतया तन्निरूपिततादृशप्रमेयाभावनिष्ठ[1]प्रतियोगितावच्छेदकत्वस्य कालिकसम्ब-न्धेऽप्यक्षततयाव्याप्तेर्दुर्वारत्वात्। न च यावत्साध्य-निरूपितत्वेन प्रतियोगिता विशेषणीया। तथा चोपदर्शिताभावात्मक-यत्किञ्चित्प्रमेयनिरूपितस्वनिष्ठ-प्रतियोगितावच्छेदककालिकसंबन्ध-मादाय न दोष इति वाच्यम्। असमवेतप्रमेयस्य



[1] प्रमेयाभावरूपस्वनिष्ठ रा.ता.

समवायसम्बन्धावच्छिन्नप्रमेयाभावो नास्तीतिप्रत्ययाविषयतया तस्य तादृशप्रमेयाभावाभावत्वे मानाभावात्, तादृशप्रमेयाभावनिष्ठ-यावत्प्रमेयनिरूपितप्रतियोगित्वाप्रसिद्ध्योक्तस्थलेऽव्याप्तितादवस्थ्यात्। न च साध्यताव-च्छेदकसम्बन्धेन वृत्तिमद्यावत्साध्यनिरूपित-प्रतियोगिताया निवेशनीयतया नोक्ताप्रसिद्धिरिति वाच्यम्। सर्वत्र समवायिन्येकया सत्तयैव तादृशप्रमेयाभावा-भावत्वनिर्वाहे[1] सर्वसमवाय्यसंग्राहकगुणादीनां तादृश-प्रमेयाभावाभावत्वे मानाभावेन दर्शिताप्रसिद्धेर्दुर्वारत्वादिति चेन्न।

**साध्यतावच्छेदकसम्बन्धेन वृत्तिमद्यत्किञ्चित्साध्यनिरूपितस्वनिष्ठ-प्रतियोगितावच्छेदकसम्बन्धनिवेशेनैवोपपत्तेः।**

कालिकसंबन्धावच्छिन्नप्रति-योगिताकस्य दर्शितसाध्याभावाभावस्य साध्यत्वेऽपि तस्य साध्यतावच्छेदक-समवाय-सम्बन्धेनावृत्तित्वात्। न चैतत्कल्पेऽपि कालिकसम्बन्धेन प्रमेयसाध्यककालत्वहेतावव्याप्तिः, कालिकसम्बन्धावच्छिन्न-प्रमेयाभावस्य यः कालिकसम्बन्धावच्छिन्नाभावस्तस्य स्वाभावात्मकस्य प्रमेयत्वेन साध्यस्य प्रतियोगितावच्छेदकीभूत-कालिकसम्बन्धेन कालिकसम्बन्धावच्छिन्नप्रमेया-भावाधिकरणे हेतोर्वृत्तेरिति वाच्यम्। **तादृशप्रतियोगितावच्छेकीभूतयत्सम्बन्धेन साध्यवद्भिन्नवृत्तित्वमभावस्य, तत्सम्बन्धेन तद्वद्वृत्तित्वस्य[2] विवक्षणीयत्वात्।** उक्तस्थले च साध्याभावस्य कालिकसम्बन्धेन साध्यवद्भिन्नेऽवृत्तेः।

---

[1] प्रमेयाभावाभाववत्ताप्रतीतिनिर्वाहे रा.ता.



[2] तद्वत्त्वस्य रा.ता.

अथैवं तादृशप्रतियोगितायां स्वनिष्ठत्वनिवेशो विफलः, तदनिवेशे "घटभिन्नं घटत्वाभावात्" इत्यादौ घटभेदात्मकसाध्यनिरूपितप्रतियोगिताव-च्छेदकतादात्म्यसम्बन्धेन घटत्वात्मकसाध्याभाववति घटत्वे हेतोर्वृत्तेः प्रसक्ताया अव्याप्तेरीदृशविवक्षयैव वारणसम्भवात्, घटत्वरूपसाध्याभावस्य साध्यनिरूपित-प्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन साध्यवद्भिन्ने घटेऽवृत्तेः। न चैवं तादृशसाध्यस्य तादृशसम्बन्धेन साध्यवद्भिन्नवृत्तिरभाव एवाप्रसिद्ध इति कथमव्याप्तिपरिहार इति वच्यम्। घटभेदस्य घटत्वाभावसमनियतत्वेन तदभिन्नतया घटत्वेऽपि समवायसम्बन्धावच्छिन्नायास्तादृशप्रतियोगितायाः सत्त्वेन तादृशप्रतियोगितावच्छेदकसमवायेन साध्यवद्भिन्नघटवृत्तिघटत्वरूप-साध्याभावस्य प्रसिद्धिसम्भवात्। तादृशाभावयोर्भेदे स्वनिष्ठत्वस्य प्रति-योगिताविशेषणत्वेऽपि घटत्वरूपसाध्याभावनिष्ठसाध्य-निरूपितप्रतियोगित्वा-प्रसिद्ध्या तद्दोषतादवस्थ्यात्।

संयोगिभेदस्य व्याप्यवृत्तित्वाव्याप्यवृत्तित्वरूपवैधर्म्येण संयोगाभावा-भेदासम्भवेऽपि संयोगवत्त्वप्रकारकप्रमाविषयत्वाभावाभेदे बाधकाभावात्स्वरूप-सम्बन्धस्यापि साध्यनिरूपितप्रतियोगि-तावच्छेदकसम्बन्धतया तेन सम्बन्धेन साध्यवद्भिन्नवृत्तेस्तादृश-प्रमाविषयत्वरूपसाध्याभावस्य प्रसिद्ध्या "संयोगिभिन्नं गुणत्वात्" इत्यादावव्याप्तेरनवकाशादिति चेन्न।

प्रतियोगितायां स्वनिष्ठत्वानिवेशे कालिकसम्बन्धावच्छिन्न-प्रतियोगिताके आकाशाभावाभावादौ साध्ये आत्मत्वादौ ["आत्मा आकाशाभावनिष्ठ-कालिकसम्बन्धावच्छिन्नप्रतियोगिताको योभावो दैशिकविशेषणतासंबन्धेन तद्वान्, आत्मत्वात्" इत्यत्र] अव्याप्तेर्दुर्वारत्वात्। तादृशसाध्यस्य यः कालिक-सम्बन्धावच्छिन्नाभावो दैशिकविशेषणतासम्बन्धावच्छिन्नतदभावस्य

तादृश-साध्यस्वरूपतया[1] दैशिकविशेषणतासम्बन्धस्य साध्यनिरूपित-प्रतियोगितावच्छेदकसम्बन्धत्वात्तेन सम्बन्धेना-काशाभावरूपसाध्याभावस्य साध्यव-द्भिन्ने काले हेतुमति च वृत्तेः। प्रतियोगितायां स्वनिष्ठत्वनिवेशे च दैशिकविशेषणतायाः

---

[1] यत्र आकाशाभावाभावः कालिकेन अस्ति तत्र आकाशाभावाभावस्य यः कालिकेनाभावः तस्य स्वरूपेणाभावोप्यस्तीति चतुर्थाभावस्य आकाशाभावाभावरूपयत्किंचित्साध्या-त्मकत्वम्। साध्यतावच्छेदकसंबन्धेन वृत्तिमत्साध्यात्मकत्वस्यानिवेशात्। न तु स्वरूपेण आत्मनि विद्यमानस्य आकाशाभावाभावस्य समनियतता उक्तचतुर्थाभावस्य, द्वितीयाभावस्य यः कालिकेनाभावः तादृशस्य तृतीयाभावस्यैवात्मनि सत्त्वेन चतुर्थाभावासंभवेन समनैयत्यासंभवात्।

ननु तथापि उक्तस्थले पुनरव्याप्तिः। तथा हि आकाशाभावाभावस्य यः स्वरूपेणाभावः तस्य स्वरूपेण अभावोपि आकाशाभावाभावरूपसाध्यात्मकः। तन्निरूपितप्रतियोगिता तृतीयाभावनिष्ठा, तदवच्छेदकसंबन्धः स्वरूपसंबन्धः, तेन च संबन्धेन आकाशाभावाधिकरणमात्मापि इति चेन्न। आकाशाभावाभावस्य स्वरूपेणाभावस्य आकाशाभावात्मकत्वात्, तन्निष्ठप्रतियोगितायाश्च कालिकसंबन्धावच्छिन्नत्वेन स्वरूप-संबन्धावच्छिन्नत्वाभावेन तादृशं चतुर्थाभावमादाय अव्याप्त्यभावात्। आकाशाभावाभावस्य कालिकसंबन्धेनाभावस्तु अतिरिक्तः तृतीयाभावः आत्मनिष्ठः, तन्निष्ठप्रतियोगिता च स्वरूपसंबन्धावच्छिन्नेति तन्निरूपकाभावं चतुर्थाभावमादाय पूर्वोक्ताव्याप्तिसंगतिः।

आकाशाभावनिष्ठसाध्यनिरूपितप्रतियोगितावच्छेदकसंबन्धत्वविरहेणा व्याप्ते-रनवकाशात्।

न च साध्यनिरूपितस्वनिष्ठप्रतियोगितानिवेशे [साध्यवद्भिन्नवृत्तिः यः साध्याभाव इति लक्षणे] साध्याभावपदोपादानवैयर्थ्यम्, [तददाने हि साध्यवद्भिन्नवृत्तिः यः तद्वदवृत्तित्वम् इति लक्षणं भवति। तथापि साध्यवद्भिन्नवृत्तिं आकाशाभावं पर्वते आदाय धूमे अव्याप्तिर्न भवति, साध्यवद्भिन्नवृत्तिः यः इत्यत्र यत्पदेनोपात्तस्यैव साध्यात्मकाभावनिरूपित-स्वनिष्ठप्रतियोगितावच्छेदकसंबन्धेन इत्यत्र स्वपदेन ग्राह्यतया, आकाशाभावादिरूप] अभावान्तरनिष्ठप्रतियोगितायाः साध्यनिरूपितत्वविरहेणैव तद्व्यावृत्तेरिति वाच्यम्। स्वपदार्थस्य द्विधा निवेशेन [साध्यात्मकाभावनिरूपितस्वनिष्ठप्रतियोगितावच्छेदक-संबन्धेन इत्यत्र स्वपदार्थत्वेन साध्याभावमनिवेश्य, साध्याभावत्वेनैव साध्याभावं संग्रह्य] साध्याभावनिष्ठसाध्यीयप्रतियोगितावच्छेदक-संबन्धेन साध्याभाववत्त्वनिवेश-ध्रौव्येण तत्पदवैयर्थ्यानवकाशात्। तादृशसम्बन्धेन साध्यवद्भिन्नवृत्ति यत् तद्वत्त्वमात्र[1]निवेशे साध्यवद्भिन्नवृत्त्यभावान्तरवति हेतोर्वृत्त्यानुपपत्तेः - इत्याहुः।

**साध्याभाववत्तानियामकसंबन्धस्य वास्तवं स्वरूपम्**

अत्रेदं बोध्यम्- साध्यवत्त्वग्रहविरोधिग्रहविषयसम्बन्धेन साध्यनिरूपित-प्रतियोगितावच्छेदकसम्बन्धेन वा नानुमित्यौपयिक-व्याप्तिशरीरेऽभावसम्बन्धनिवेशसम्भवः। साध्यभेदेन व्याप्तेर्भेदात्। लाघवेन तत्तत्साध्यकस्थले तत्तत्साध्याभाववति दैशिक-कालिकविशेषणता-समवायादिसंसर्गाणामेव विशिष्याभावसम्बन्धतया निवेशौचित्यात्। उक्तरूपेण विशेषणताविशेषादीनां संबन्धताया



[1] साध्यवद्भिन्नवृत्तित्वमात्र रा.ता. साध्यवद्भिन्नवृत्तिमत्त्वमात्र भी.

अत्यन्ताप्रामाणिकतया तद्रूपावच्छिन्नस्य सम्बन्धविधया व्याप्ति-घटकत्वायोगाच्च। परन्तु यादृशसाध्यकस्थले यादृशसम्बन्धोऽभावसम्बन्धतया व्याप्तिघटकस्तत्परिचयायैव दर्शितोक्तयः। तथा च यादृशसम्बन्धेन प्रकृतसाध्यवति तद्भिन्नवृत्तिसाध्याभावो न वर्तते तादृशसंम्बन्धेन तद्वत्त्वं निवेश्यमित्युक्त्यैव तत्परिचयसम्भवादित्यलं वाग्जालेन।

## साध्यभावत्वविशिष्टाधिकरणत्वविवक्षा

तत्र च साध्याभाववत्पदेन साध्याभावत्वविशिष्टाधिकरणं विवक्षणीयम्। तेन 'गुणान्यत्त्वविशिष्टसत्ताभाववान् गुणत्वात्' इत्यादौ विशिष्टस्यानतिरिक्तया सत्तारूपसाध्याभावस्य गुणादौ सत्त्वेऽपि न क्षतिः, गुणे गुणान्यत्त्वविशिष्ट-सत्ताभावो नास्तीत्यप्रत्ययात्तत्र तादृशाभावत्वविशिष्टाधिकरणत्वानभ्युपगमात्।

## घटत्व-घटाकाशसंयोगान्यतराभाववान् इत्यत्राव्याप्तिवारणम्

अथैतल्लक्षणे 'घटत्वघटाकाशसंयोगान्यतराभाववान्, आकाशत्वात्' इत्यादौ अव्याप्तिः। घटत्वस्य व्याप्यवृत्तितया तद्घटितान्यतराभाववद्भिन्ने घटे वर्तमानस्य घटा-काशसंयोगात्मकसाध्याभावस्य हेत्वधिकरणे गगनेऽपि वृत्तेः। निरवच्छिन्नसाध्याभाव-वत्तानिवेशे च साध्यवद्भिन्नवृत्तित्वांश-वैयर्थ्यादिति चेन्न। एतल्लक्षणकर्तृमते स्वप्रतियोगिसामानाधिकरण्य-स्वप्रतियोगिवैयधिकरण्यरूप-विरुद्धधर्माध्यासोऽभावस्य भेदक इत्येतादृशयुक्त्या द्रव्यवृत्तिसंयोगाभाव-गुणवृत्तिसंयोगाभावयो-र्भेदसिद्धिरित्यनुसृत्य अव्याप्यवृत्तिसाध्यकस्थलेऽव्याप्तिः समाधीयते। तथा च घटाकाशसंयोगस्योक्तान्यतराभावप्रतियोगित्वेऽपि न तदभावरूपता। तथा सति तादृशविरुद्धधर्मयोः समावेशापत्तेः।[घटे घटत्वस्य घटाकाशसंयोगस्य च सत्त्वेन घटवृत्तेः तादृशान्यतराभावस्य

प्रतियोगिवैयधिकरण्यात्, आकाशवृत्तेश्च पूर्वोक्तरीत्या देशान्तराद्यवच्छेदेन प्रतियोगिसामानाधिकरण्यात्] तयोर्विरोधाभावे संयोगाभावस्याप्यधिकरणभेदेन भेदासिद्धेः अव्याप्यवृत्तिसाध्यके सर्वत्रैवाव्याप्तेः। एतदभिप्रायेण लक्षणान्तरस्यावतारणीयत्वादिति गगनेऽतिरिक्त एव तदभावः स्वीकरणीयः। स च न साध्यवद्भिन्नवृत्तिरिति न दोषः।

साध्यवद्भिन्ने वर्तत इत्यनेनानवच्छिन्नाया एव वृत्तेर्विवक्षणान्न घटाकाश-संयोगात्मकाभावमादाय दोष इति तु न श्रद्धेयम्। तथा सति सुषुप्त्यादिकालावच्छेदेनास्मदाद्यात्मवृत्तौ स्वाश्रयाश्रयत्व-सम्बन्धावच्छिन्नप्रति-योगिताकज्ञानत्वाद्यभावे साध्ये सुखादावव्याप्तिः। तत्र [आत्मा स्वाश्रयाश्रयत्व-सम्बन्धावच्छिन्नप्रतियोगिताकज्ञानत्वाद्यभाववान् सुखात् इत्यत्र] साध्यवद्भिन्न ईश्वरे तादृशसम्बन्धेन निरवच्छिन्नवृत्तिकस्य ज्ञानत्वादिरूपाभावस्य तेन सम्बन्धेन सुखाद्यधिकरणेऽ-स्मदाद्यात्मन्यपि वृत्तेः। [यदि चायं हेतुरीश्वरे नित्यसुखाङ्गीकारे व्यभिचारीति मन्यते तदापि] उत्पत्तिकालावच्छिन्न-घटादिवृत्तितादृशसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावादिसाध्यकघट त्वादिहेतौ [घटः स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्न-प्रतियोगिताकसत्ताभाववान् घटत्वात् इत्यत्र] अव्याप्तिश्च।

## तृतीयलक्षणम्

संयोगाभावनिष्ठयोर्व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयोः प्रतियोगिसामानाधि-करण्य-प्रतियोगिवैयधिकरण्ययोर्वक्ष्यमाणरीत्या न विरोध इत्यभिप्रायेणा-व्याप्यवृत्तिसाध्यकस्थलेऽव्याप्त्या लक्षणान्तरमवतारयति- **कर्मादाविति।**



**दीधितिः**

**कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह- साध्यवदिति ।**

इदं त्ववधेयम्- द्रव्यवृत्तिसंयोगाभावो न गुणादौ स्वीक्रियते, अपि तु क्लृप्ते तद्वृत्तिसंयोगवत्त्वप्रकारकप्रमाविषयत्वाद्यभावे एव संयोगाभावत्वं कल्प्यतेऽनन्त-गुणाद्यधिकरणे संयोगाभाव-कल्पनामपेक्ष्य तथाविधैकाभावे संयोगाद्यभावत्कल्पने लाघवात्। न च संयोगवत्त्वप्रकारकप्रमाविषयत्वाद्यभावे द्रव्यत्वाभाव-द्रव्यभेद-संयोगिभेदादौ वा संयोगाभावत्वं कल्प्यत इत्यत्र विनिगमकाभाव इति वाच्यम्। तादृशाभावानां समनियततयाऽभेदात्। एवं च द्रव्यवृत्तिसंयोगाभाव-गुणवृत्तिसंयोगाभावयोर्भेदः सप्रमाण एव।

अथैवं द्रव्यत्वाभावादीनामप्यानन्त्यापत्तिः। कर्मादौ गुणवृत्ति-द्रव्यत्वाभावो न कल्प्यते, अपि तु क्लृप्ते तद्वृत्तिद्रव्यगुणान्यतरत्त्वाभावे एव तदभावत्वमित्यादितर्कगवेषणया कर्मादिवृत्तिद्रव्यत्वाद्यभावस्य गुणादिवृत्ति-तदभावतो भेदसिद्धिरिति चेत्- इष्टमेवैतदधिकरणभेदेनाभावभेदवादिनाम्। न चैवं संयोगाद्यभावत्वकल्पनायां धर्मिणामप्यानन्त्यादुक्त-विनिगमकाभावसम्भव इति वाच्यम्। विनिगमनाविरहेऽपि[1] द्रव्यत्वाभावादौ संयोगाद्यभावत्वकल्पनाया निष्प्रत्यूहत्वादिति।

## चतुर्थलक्षणम्

### दीधितिः

**हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह-** सकलेति।

**साकल्यं साध्याभाववति साध्ये च बोध्यम्। साध्याभावो वा साध्यतावच्छेदकवच्छिन्नप्रतियोगिताको ग्राह्यः। तेन**



[1] विरहेणापि रा.ता.

**विपक्षैकदेशनिष्ठा-भावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः। न वा नानाव्यक्ति-साध्यकसद्धेतावव्याप्तिः।**

**हेतोरिति**। नानाधिकरणकस्येत्यादिः। **अव्याप्तेरिति**। "एतद्रूपवान् एतद्रसात्" इत्यादौ एतद्रसाधिकरणे एतद्रूपाधिकरणे द्वित्वादिना भेदसत्त्वेऽपि व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन साध्यवन्निष्ठप्रतियोगितायाः प्रतियोग्यवृत्तित्वेन वा भेदस्य विशेषितत्वे लक्षणगमनसम्भवान्नासम्भवो दर्शितः।

**साकल्यमिति**। बोध्यम् इत्यस्य विशेषणमित्यादिः।

[तथा च साकल्यं साध्याभाववति साध्ये च बोध्यम्। साध्याभाववति साकल्यादाने धूमवान् वह्नेरित्यादौ विपक्षैकह्रदादिनिष्ठाभावप्रतियोगिनि व्यभि-चारिणि धूमे अतिव्याप्तिः। साध्ये साकल्यादाने वह्निमान् धूमादित्यादौ नाना-व्यक्तिसाध्यकसद्धेतौ महानसीयवह्न्याद्यभाववत्पर्वतवृत्तित्वमादाय धूमेऽव्याप्तिः।]

**साध्याभाववति इत्यस्य प्रथमोपादानप्रयोजनम्**

अत्र साध्याभाववति साकल्यविशेषणसत्त्वे एव साध्ये तद्विशेषणव्यावृत्तिः सङ्गच्छते। अन्यथा साध्याभाववत्ताया हेतुमत्साधारण्येपि साध्याभाववद्यत्किञ्चिद्व्यक्तिनिष्ठाभाव-प्रतियोगित्वमादाय नानाव्यक्तिसाध्यकसद्धेतौ लक्षणसमन्वय-सम्भवात्। अतः 'साध्ये तदभाववति च' इत्यनुक्त्वा साध्याभाववति साकल्यविशेषणं प्रथमतो दर्शितम्।

न च साध्याभाववति साकल्यविशेषणासत्त्वेऽपि वह्निमान् पर्वतान्यत्वात् इत्यादावतिव्याप्तिवारणमेव साध्ये साकल्यविशेषणप्रयोजनमस्ति। उभयत्र साकल्यविशेषणादाने

यत्किञ्चित्साध्याभाववति पर्वते हेत्वभावसत्त्वेनातिव्याप्तिः, साध्ये साकल्यविशेषणसत्त्वे तु ह्रदादेरेव सकलसाध्याभाववत्तया तत्र हेतुसत्त्वेनातिव्याप्त्युद्धारान्नोक्ताभिप्रायवर्णनं सम्यगिति वाच्यम्। साध्याभाववति साकल्यविशेषणासत्त्वे साध्ये साकल्यविशेषणस्योक्तातिव्याप्तिवारणप्रयोजन-कत्वसम्भवेऽपि [धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणायावश्यमुपादेयेन साध्या-भाववति साकल्यविशेषणनैव वह्निमान् पर्वतान्यत्त्वात् इत्यत्रातिव्याप्तिनिवारणेन तत्रातिव्याप्तिवारणस्य साध्यगतसाकल्यविशेषणसाध्य-विशेषणान्तरा-साध्यप्रयोजनत्वरूपवास्तवप्रयोजनत्वाभावेन] साकल्यविशेषणस्य वक्ष्यमाणप्रयोजनस्यैव वास्तवतया तस्य साध्याभाववति साकल्यविशेषणसत्त्वे एव सङ्गतेरादौ तत्प्रदर्शनस्योचितत्वात्।

वस्तुतस्तु [साध्ये साकल्यविशेषणे दत्तेपि उभयाभावादिवारणासंभवात्] साध्ये साकल्यविशेषणं परित्यज्य साध्याभावे साध्यतावच्छेदकावच्छिन्न-प्रतियोगिताकत्वनिवेशरूप-कल्पान्तरस्यावलम्बनीयतया चरममेव तत्प्रदर्शन-मुचितम्। '[साकल्यं] साध्ये तदभाववति च बोध्यम्' इत्युक्त्वा 'साध्यताव-च्छेदकावच्छिन्नप्रतियोगिताको वाऽभावो ग्राह्यः' इत्युक्तौ साध्याभाववति साकल्यं निवेश्यते, साध्याभावो वैतादृशो निवेश्यत इत्येतादृशविकल्पः प्रतीयते, स चाविवक्षित इति सारम्[1]।

## साध्याभावे साकल्यविशेषणदानासंभवः

अव्याप्तिवारणाय साध्याभावे साकल्यविशेषणे "धूमवान् वह्नेः"इत्यादौ साध्यतावच्छेदकीभूतसंयोगादि-सम्बन्धावच्छिन्न-प्रतियोगिताकसकलसाध्याभावा-धिकरणं गुणादिरेव स्यात् अयोगोलकादेर्ह्रदासंयुक्तत्वावच्छिन्नप्रतियोगिता-काभावानधिकरण-



[1] सारः?

त्वादित्यतिव्याप्तिः, "वह्निमत्त्वप्रकारकप्रमाविषयो धूमात्" इत्यादौ साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतत्तद्विपक्षा-वृत्तित्वावच्छिन्नाभावस्य तत्तद्विपक्षमात्रवृत्तितया सकलसाध्याभावा-धिकरणाप्रसिद्ध्याव्याप्तिश्चेति तदुपेक्ष्य साध्ये साकल्यविशेषणं निवेशितम्।

**दीधितिः**

**साध्याभावो वा साध्यतावच्छेदकवच्छिन्नप्रतियोगिताको ग्राह्यः। [तेन न नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः।]**

**साध्याभावे साध्यतावच्छेदकवच्छिन्नप्रतियोगिताकत्वनिवेशः**

ननु साध्ये साकल्यविशेषणदानेऽपि वह्निमान्धूमादित्यादा-वव्याप्तितादवस्थ्यं, पर्वतादावपि पर्वतीयवह्नेर्द्वित्वादिनाऽभावस्य सत्त्वेन सकलसाध्या-भावसत्त्वात्, व्यासज्यवृत्तिधर्मानवच्छिन्नप्रति-योगिताकत्वेनाभावविशेषणे च वह्निधूमोभयवान् वह्नेरित्यादा-वतिव्याप्तिः, [वह्निधूमोभयाभावस्य व्यासज्य-वृत्तिधर्मावच्छिन्न-प्रतियोगिताकत्वेन लक्षणघटकत्वासंभवेन वह्निधूमान्यतरा-भावस्यैव लक्षणघटकतया] वह्निमतस्तथाविधसकलसाध्याभावानधिकरणत्वात्, साध्यतावच्छेदकातिरिक्तो यो व्यासज्यवृत्तिधर्मस्तदनवच्छिन्न-प्रतियोगिताकत्व-निवेशने च लाघवात्साध्यतावच्छेदकावच्छिन्न-प्रतियोगिताकत्वमेवाभावे विशेषण-मुचितं, किं साध्ये साकल्यविशेषणेनेत्यभिप्रेत्य तथैवाह- **साध्यतावच्छेदकेति**।

साध्याभाववति साकल्यविशेषणप्रयोजनमाह- **विपक्षेति**। [पूर्वमूले]

वैकल्पिकयोः साध्यतदभावयोः साकल्य-साध्यतावच्छेदकावच्छिन्न-प्रतियोगिताकत्वविशेषणयोर्व्यावृत्तिमाह- **न वेति**।

**एकव्यक्तिसाध्यके अव्याप्त्यसंभवः**

एकव्यक्तिसाध्यके "एतद्रूपवान् एतद्रसात्" इत्यादौ हेत्वधिकरणे पूर्व-क्षणवृत्तित्वविशिष्टसाध्याभावो न प्रतियोगिता-वच्छेदकावच्छिन्नप्रतियोगिव्यधि-करणः पूर्वक्षणवृत्तित्वविशिष्टैतद्रूपादेरेतद्रसाधिकरणे वृत्तेः। एतद्रूपतद्रूपोभय-त्वावच्छिन्नाभावोऽपि न तथा, प्रतियोगिता-वच्छेदकावच्छिन्नाधिकरणाप्रसिद्धेरिति तत्र लक्षणसङ्गतिरित्यतो नानाव्यक्तिसाध्यक इत्युक्तम्। अत एवाव्याप्तिरेवोक्ता, नासम्भवः।

अत्र नानाव्यक्तिसाध्यकत्वम् = व्यधिकरणद्वयवृत्तिसाध्यतावच्छेदक-कत्वम्। अत एवैतद्व्यक्तिवृत्ति-यावद्धर्मवानेतत्त्वादित्यादौ नानाव्यक्तिसाध्यकेऽ-व्याप्तिविरहेऽपि न क्षतिः।

**दीधितिः**

**अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेः, व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणायाभावद्वये प्रतियोगिव्यधिकरणत्वं बोध्यम्।**

**अव्याप्यवृतीति**। "कपिसंयोगी एतद्वृक्षत्वात्" इत्यादावित्यर्थः। 'अव्याप्तेर्वारणाय' इत्यन्वयः। **व्यभिचिरिणि चेति**। "एतद्वृक्षत्ववान् कपिसंयोगात्" इत्यादौ चेत्यर्थः। अभावद्वये=

साध्याभावे हेत्वभावे च। **तथा चाव्याप्यवृत्तिसाध्यक-व्याप्यवृत्तिसद्धेतावव्याप्तिवारणाय साध्याभावे, व्यभि-चारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणाय हेत्वभावे प्रतियोगि-वैयधिकरण्यमित्यर्थः।**

यद्यपि हेत्वभावे प्रतियोगिवैयधिकरण्यविशेषणस्यावश्यकतया "कपि-संयोगी कपिविभागात्" इत्यादावव्याप्यवृत्ति-हेतुकेऽव्याप्तिवारणप्रयोजनकत्वं साध्याभावे तद्विशेषणस्य सम्भवतीति **व्याप्यवृत्ती**त्यकिञ्चित्करम्, तथापि हेत्वभावे तद्विशेषणप्रतिसन्धानं विनैव व्याप्यवृत्तिहेतुकस्थलेऽव्याप्तिनिर्णयो भवतीत्येतदभिसन्धायैव तदुक्तम्[1]।

**प्रतियोगिवैयधिकरण्यस्वरूपम्**

प्रतियोगिवैयधिकरण्यञ्च न प्रतियोग्यधिकरणावृत्तित्वम्, अव्याप्य-वृत्तिसाध्यके तथाविधहेतुके च [सद्धेतौ] तादृशसाध्याभाव-हेत्वभावाप्रसिद्ध्याऽव्याप्तेः, अपि तु प्रतियोग्यनधिकरणवृत्तित्वम्। **तथा च प्रतियोग्यन-धिकरणवृत्तित्वविशिष्टसाध्याभावाधिकरणेषु यावत्सु प्रतियोग्यन-धिकरणवृत्तित्वविशिष्टः सन् वर्तते योऽभावस्तत्प्रतियोगित्वमर्थः।** तेन कपिसंयोग्येतद्वृक्षत्वादित्यादौ कपिसंयोगाद्यनधिकरणगुणादिवृत्तित्वोपलक्षित-कपिसंयोगाद्यभावस्य हेत्वधिकरणे सत्त्वेऽपि नाव्याप्तिः, न वा एतद्वृक्षत्ववान् कपिसंयोगादित्यादौ तथाविधकपिसंयोगाद्यभावस्य सकल-साध्याभावाधिकरणे सत्त्वेऽप्यतिव्याप्तिः।

**प्रतियोग्यनधिकरणीभूतसाध्याभावाधिकरणयावन्निष्ठ-स्वप्रतियो-ग्यनधिकरणताकाभावप्रतियोगित्वमिति फलितोऽर्थः।**



[1] संधायैतदुक्तम् रा.ता.

**साध्यतावच्छेदक-हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशः**

प्रथमे साध्यतावच्छेदकसम्बन्धेन, चरमे हेतुतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं बोध्यम्। तेन "अयम् आत्मा आत्ममहाकालान्य-तरत्वात्" इत्यादौ व्यभिचारनिरूपकाधिकरणस्य कालस्य कालिकसम्बन्धेना-त्मत्वाधिकरणत्वेऽपि नातिव्याप्तिः, न वा वह्निमान् धूमादित्यादौ साध्याभावाधि-करणयावदन्तर्गतकालज्ञानादिषु कालिक-विषयित्वादिसम्बन्धेन हेत्वभाव-प्रतियोग्यधिकरणतासत्त्वेऽप्यसम्भवः, [एकज्ञानविषयत्वादीनां संबन्धत्वास्वीकारे "आत्मभिन्नं ज्ञानवदन्यत्त्वात्" इत्यादौ विपक्षे आत्मनि केनापि संबन्धेन प्रतियोगिसत्त्वासंभवेन अव्याप्त्यभावात् असंभवाभावेन] अव्याप्तिर्वा।

इत्थञ्च प्रतियोगित्वे सम्बन्धविशेषावच्छिन्नत्वेन न निवेशनीये, सम्बन्धान्तरावच्छिन्नप्रतियोगिताकयोः साध्याभा-वहेत्वभावयोरुक्तसम्बन्धेन प्रतियोगिसमानाधिकरण-तयाऽसम्भवातिव्याप्त्योरनवकाशात्।

**दीधितिः**

**हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिव्यधिकरणः, तत्प्रतियोगित्वं च हेतुतावच्छेदकरूपेण बोध्यम्। तेन द्रव्यत्वादौ साध्ये विशिष्टसत्तादौ नाव्याप्तिः। न वा विशिष्टसत्तात्वादिना तादृशाभावप्रतियोगिनि सत्तादावतिप्रसङ्गः।**

**उभयत्र प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यनिवेशः**

**हेत्वभावोऽपीति**। [हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगि-वैयधिकरण्यानिवेशे द्रव्यत्वाभाववति गुणादौ वर्तमानस्य विशिष्टसत्त्वाभावस्य सत्तारूपप्रतियोगिसामानाधिकरण्येन "द्रव्यं

विशिष्टसत्त्वात्" इत्यत्र अव्याप्तिः।] अपिशब्देन साध्याभावेऽपि प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यं निवेशनी-यमिति सूच्यते। तेन "विशिष्टसत्तावान् जातेः" इत्यादौ हेत्वधिकरणगुणादिषु साध्याभावप्रतियोगिसत्त्वादेः सत्त्वेऽपि नातिव्याप्तिः।

**हेत्वभावस्य प्रथमोपादानप्रयोजनम्**

अत्र 'साध्याभावोऽपि' इत्युक्तावग्रिमतत्पदेन हेत्वभाव-परामर्शासम्भवः, तत्र हेत्वभावपदोपादाने चाऽक्षराधिक्यमिति तन्नोक्तम्।

**तत्प्रतियोगित्वं** साध्याभाववन्निष्ठाभावप्रतियोगित्वम्, **हेतुतावच्छेदक-रूपेण** हेतुतावच्छेदकावच्छिन्नमित्यर्थः। हेत्वभावनिष्ठप्रतियोगिवैयधिकरण्यशरीरे स्वप्रतियोगिता-वच्छेदकावच्छिन्नत्वनिवेशस्य प्रयोजनमाह- **द्रव्यत्वादाविति**। **विशिष्टेति** गुणकर्मान्यत्वविशिष्टेत्यर्थः।

**प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वनिवेशः**

हेत्वभावप्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वनिवेशस्य प्रयोजन-माह- **न वेति**। अत्रापि 'द्रव्यत्वादौ साध्ये' इत्यनुषज्यते। **विशिष्टसत्तात्वादिना** गुणकर्मान्यत्वविशिष्टसत्तात्वादिना। तृतीयार्थश्चात्रावच्छिन्नप्रतियोगिताकत्वं, तस्याभावेऽन्वयः। प्रतियोगिपदार्थैकदेशप्रतियोगित्वान्वितमवच्छिन्नत्वं वा तदर्थः। **तादृशाभावेति**। सकलसाध्याभाववन्निष्ठाभावेत्यर्थः। [तथा च "द्रव्यं सत्त्वात्" इत्यादौ द्रव्यत्वाभावाधिकरण-गुणादिवृत्ति-

विशिष्टसत्तात्वावच्छिन्नाभावप्रतियोगिनि सत्तादावतिप्रसङ्गवारणाय प्रतियोगितायां हेतुतावच्छेदकाव-च्छिन्नत्वनिवेशः।]

**हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे गौरवम्**

न च [अभावमात्रे प्रतियोगितावच्छेदकावच्छिन्न-वैयधिकरण्यमनिवेश्य ] हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्न-वैयधिकरण्यमेव निवेश्यतां, ततोऽपि तत्प्रयोजननिर्वाहात्। तथाच द्रव्यं सत्त्वादित्यादौ गुणादिनिष्ठविशिष्टसत्ता-भावस्य हेतुतावच्छेदकावच्छिन्नसमानाधिकरणतयैवातिव्याप्तिवारणसम्भवात् प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वनिवेशनमफलमिति वाच्यम्। हेत्वभावे हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे **सकलसाध्याभाववन्निष्ठा या हेतुतावच्छेदकावच्छिन्नानधिकरण-वृत्तित्वविशिष्टनिरूपिताधिकरणता तन्निरूपकाभावप्रतियोगित्व**मर्थः स्यात्, तदपेक्षया **सकलसाध्याभाववन्निष्ठा या हेतुतावच्छेदकावच्छिन्नयादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणता [तादृशप्रतियोगितावत्त्वरूपस्य] तद्वत्त्व**रूपस्यास्मदीयफलितार्थस्य लघुत्वात्[1]।

न च ममापि **सकलसाध्याभाववन्निष्ठं यद्धर्मावच्छिन्नानधिकरणत्वं तद्धर्मवत्त्व**मित्येवार्थः, स चातिलघुरेवेति वाच्यम्। एतादृशार्थकरणे मूलोक्तं प्रतियोगिताया व्याप्तित्वं व्याहन्येतेति मूलानुसारेण दीधितिकृता गुर्वर्थानुसरणात्, उक्तविशेष्यविशेषणभावेन निवेशे व्यर्थविशेषणतानवकाशात्।

[तथापि हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्न-वैयधिकरण्यनिवेशपक्षे सकलसाध्याभाववन्निष्ठा या हेत्वभावीय-

---



[1] अगुरुत्वात् रा.ता.का.

यादृशप्रतियोगितावच्छेदकाव-च्छिन्नानधिकरणता तद्वत्त्वरूपतया व्याप्तेः प्रतियोगितायां हेतुतावच्छेदकाव-च्छिन्नत्वानिवेशेन लाघवं बोध्यम् ।]

**अत्र केचिन्मतम्**

केचित्तु [हेत्वभावे] हेतुतावच्छेदकावच्छिन्न-वैयधिकरण्यनिवेशे ["द्रव्यं विशिष्टसत्त्वात्" इत्यादौ सत्तायामतिव्याप्तिप्रसङ्गः,] सकलसाध्याभाववन्निष्ठ-विशिष्टसत्तात्वावच्छिन्न-व्यधिकरणाभावप्रतियोगित्वरूपव्याप्तिविशिष्टवैशिष्ट्य-ज्ञानस्य गुणेऽपि सत्त्वाद्बाधानवतारदशायां तत्र द्रव्यत्वानुमित्यापत्तिः। अस्मन्मते तु "तत्प्रतियोगित्वञ्च" इत्यतो लब्धस्य तादृशप्रतियोगितावच्छेदक-हेतुतावच्छेदकस्य व्याप्तितया तद्विशिष्टवैशिष्ट्यावगाहिज्ञानस्य गुणेऽपि भ्रमत्वादित्याहुः।

## पञ्चमलक्षणम्

एतल्लक्षणं दूषयित्वोत्तरलक्षणमवतारयति- **यत्रैकव्यक्तिकमिति**।।

## दीधितिः

**यत्रैकव्यक्तिकं साध्यं विपक्षो वा तत्र, निर्धूमत्वादिव्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिः[1], तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं याव-द्विपक्षावृत्तित्वादत आह-** साध्यवदन्येति।

यत्रैकव्यक्तिकं साध्यं तत्राव्याप्तिरित्यन्वयः। "एतद्रूपवान् एतद्रसात्" इत्यादावनेकाशेषत्वरूपसाकल्यस्य साध्येऽसत्त्वादिति भावः।

साध्ये साकल्यविशेषणं परित्यज्य कल्पान्तरानुसरणान्न तत्रैतद्दोषावकाश इत्यत आह- **विपक्षः इति। विपक्षः** साध्याभाववान्। अत्राप्येकव्यक्तिक इत्यस्य विशेषणस्य लिङ्गव्यत्ययेनानुषङ्गः। तथा च "एतद्घटभिन्नं पटत्वात्" इत्यादौ साध्याभाववत्येतद्घटादौ साकल्याप्रसिद्ध्याऽव्याप्तिरित्यर्थः।

सकलपदस्य [अनेकत्वार्थं परित्यज्य] अशेषमात्रपरत्वे दोषान्तरमाह- **निर्धूमत्वादिव्याप्ये इति। तत्त्वेन** निर्धूमत्वव्याप्यत्वेन। तथा च "धूमत्वावच्छिन्नाभावव्याप्यवान्[2] वह्नित्वावच्छिन्नाभावात्" इत्यादावित्यर्थः। धूमत्वाद्यवच्छिन्नाभावे साध्ये एकव्यक्तिकतया पूर्वदोषाक्रान्तत्वेन तद्व्याप्यसाध्यकानुसरणम्। निर्धूमत्वव्याप्य-

---

[1] वस्तुतस्तु प्रातिस्विकरूपेण एतद्घटभेद-तद्घटभेदयोः साध्यत्वे "इदं कुड्यम् एतद्घटभेद-तद्घटभेदवत् एतद्घटभेदव्याप्य-तद्घटभेदव्याप्याभ्याम्" इत्यादौ साध्याभाववति एतद्घटे तद्घटे च प्रत्येकं हेत्वभावाभावेन अव्याप्तिप्रसङ्गात् एकस्य हेत्वभावस्य यावद्विपक्षावृत्तित्वविवक्षणं न संगच्छते।



[2] साध्यतावच्छेदकसंबन्धः स्वरूपसंबन्धः।

जलत्वादे[1]स्ताद्रूप्येण साध्यतायां सद्धेतुत्वानुपपत्तिरत**स्तत्त्वेन** इत्युक्तम्। **हेत्वभावस्येति** ।

**वह्न्यभावभेदमादायाव्याप्तिपरिहारशङ्का (जगदीशमतम्)**

अथ वह्न्यात्मकहेत्वभावस्य प्रत्येकं सकलसाध्याभाववन्निष्ठत्वा-सम्भवेऽपि सकलतन्निष्ठवह्न्यभावादिभेदप्रतियोगितामादायैव लक्षणं सङ्गम-नीयम्।

[ननु धूमवान् वह्नेरित्यादौ साध्याभावाधिकरणे अयोगोलके समवायेन वह्न्यभावमादायातिव्याप्तिवारणाय हेतुनिष्ठप्रतियोगितायां हेतुतावच्छेदक-संबन्धावच्छिन्नत्वनिवेशादेव वह्न्यभावभेदमादाय न लक्षणसमन्वयः, वह्न्यभावनिष्ठप्रतियोगितायाः तादात्म्य-संबन्धावच्छिन्नतया हेतुतावच्छेदकीभूतस्वरूपसंबन्धावच्छि-न्नत्वाभावात् इति चेन्न।] हेतुतावच्छेदकसम्बन्धेन प्रतियोगि-वैयधिकरण्यनिवेशादेव व्यभिचारिणि सम्बन्धान्तरावच्छिन्न-प्रतियोगिताक-हेत्वभावमादायातिप्रसङ्गानवकाशेन हेत्वभाव-प्रतियोगितायां हेतुताव-च्छेदकसम्बन्धावच्छिन्नत्वानिवेशात्।

**वह्निमद्भेदहेतुतामतम्**

**यत्तु** वह्निमद्भेदहेतुताभिप्रायकोऽयं ग्रन्थः, [वह्निमद्भेदाभावस्य भेदप्रतियोगितावच्छेदकीभूतवह्निस्वरूपतया तत्तद्वह्नेश्च प्रत्येक-विश्रान्ततया हेत्वभावमादाय लक्षणगमनासंभवात्,] भेदभेदस्यानवस्थाभयेनाधिकरणस्वरूपस्य स्वीकरणीयतया तस्य च प्रत्येकविश्रान्ततया यावद्विपक्ष-वृत्तित्वासम्भवात्, तत्र हेतुभेदमादायापि लक्षणगमनासम्भवादिति,

---



[1] ह्रदत्वादेः रा.ता.

**तन्न।**
आकाशाभावाद्यधिकरणकभेदभेदस्याकाशाभावाद्यधिकरण-स्वरूपतया तस्य च यावद्विपक्षवृत्तित्वेन तमादायैव लक्षणगमनसम्भवात्।

न चैतादृशरीत्याकाशाभावमादाय [पटो घटभेदात् इत्यादौ] भेदहेतुकव्यभिचारिण्यतिप्रसक्त्या हेत्वभावत्वेन सकलसाध्याभावाधिकरणवृत्तित्वं विवक्षणीयम्। तथा सत्यधिकरणस्वरूपाभावस्य [तत्तदधिकरणरूपे] स्वस्मिन्नेव तदभावत्वेन वृत्तिरिति नातिव्याप्त्यवकाशः। एवञ्च आकाशाभावमादाय नोक्ताव्याप्तिपरिहारसंभव इति वाच्यम्। उक्तस्थले आकाशाभावस्य [मठादौ घटभेदसत्त्वेन] हेतुतावच्छेदकसम्बन्धेन [घटभेदरूपप्रतियोगिसामानाधिकरण्येन] प्रतियोगिवैयधिकरण्यविरहादेवातिव्याप्तिवारणसम्भवेन तादृशविवक्षाया निष्प्रयोजनकत्वात्। वह्निमद्भेदहेतुकस्थले च साध्याभावाधिकरणस्य हेतुरूपप्रतियोग्यनधिकरणत्वेना-काशाभावरूपहेतुभेदस्य प्रतियोगिव्यधिकरणत्वेन अव्याप्तिवारणसम्भवादिति दिक्।

**वह्न्यभावान्यत्वविशिष्टवह्न्यभावस्य हेतुतामतम्**

**अत्र केचित्**- यत्र वह्न्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्यं साध्यं वह्न्यभावान्यत्वविशिष्टवह्न्यभावो हेतुः, [तथा च ह्रदः सामानाधिकरण्यसंबन्धेन वह्न्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्यवान्, सामानाधिकरण्यसंबन्धेन वह्न्य-भावान्यत्वविशिष्टवह्न्यभावात् इत्यनुमानम्। अत्र केवलवह्न्यभावस्य हेतुत्वे वह्न्यभावस्यापि हेत्वधिकरणतया तत्र साध्याभावेन व्यभिचारित्वापत्तिः। अतः विशिष्टहेत्वनुधावनम्।] तत्र वह्न्यभावस्यापि सकलसाध्याभाववदन्तर्गततया तत्र [विशिष्टशुद्धयोरनतिरेकेण

विशिष्ट]वह्न्यभावभेदासत्त्वेन तमादाय लक्षणगमनासम्भवात्। न च तादृशविशिष्टहेतुकस्थले हेतुभेदस्य सकलसाध्याभाववन्निष्ठत्वासंभवेऽप्यखण्डविशिष्टात्यन्ताभावस्य तथात्वमादायैव लक्षणं संगमनीयमिति वाच्यम्। प्राचीनमते विशिष्टाभावस्य विशेषणाभाव-विशेष्याभावाभ्यामनतिरिक्ततया[1] तादृशविशिष्टाभावस्य वह्न्यभावत्व-वह्न्युभयरूपत्वेन सकलसाध्याभाववन्निष्ठत्वासम्भवात्।

अथैवमपि विषयितादिसम्बन्धावच्छिन्नप्रतियोगिताकस्य वह्न्यभावा-त्यन्ताभावस्याखण्डतया सकलधूमवन्निष्ठतया तमादायैव लक्षणं सङ्गमनीयमिति चेन्न। वृत्त्यनियामकतया विषयितादिसम्बन्धानामत्यन्ताभावप्रतियोगिता-नवच्छेदकत्वात्। संयोगादिरूपव्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्य-भावात्यन्ताभावस्याखण्डस्य सकलधूमवन्निष्ठत्वेऽपि तदभावप्रतियोगिता न हेतुतावच्छेदकीभूतवह्न्यभावत्वावच्छिन्ना, तत्र लाघवेन अभावत्वस्यैवा-च्छेदकत्वादिति न तमादायापि लक्षणसंगतिः।

न च [वह्निमान् प्रमेयधूमात् इत्यादौ] गुरुधर्मावच्छिन्नहेतुकस्थले ["संभवति लघौ गुरौ तदभावात्" इति न्यायेन प्रमेयधूमत्वे स्वरूपसंबन्धरूपप्रतियोगितावच्छेदकताया अनङ्गीकारेण प्रमेयधूमत्वावच्छिन्न-प्रतियोगिताया अप्रसिद्ध्या] लक्षणसङ्गमनाय [स्वविशिष्टसंबन्धिनिष्ठाभाव-

---

[1] मतं चेदं विचार्यम्। देवदत्तसत्त्वेपि दण्डासत्त्वे दण्डी देवदत्तो नास्तीति प्रत्ययात्। अत्र च विशेष्याभावस्य असत्त्वेन प्राचीनमतरीत्या विशिष्टाभावासंभवात्। किंचैव हेत्वभाव-साध्याभावयोरप्रसिद्धिरेव, प्रत्येकमपि एकत्रानवस्थानात्। किंचैव हेत्वभाव-साध्याभावयोः अप्रसिद्धिरेव, प्रत्येकमपि एकत्रानवस्थानात्।

प्रतियोगितानवच्छेदकतत्कत्वरूपं[1]] पारिभाषिकमेव अवच्छेदकत्वं हेतुताव-च्छेदके निवेश्यम्। तथा च वह्न्यभावत्वादेरपि तादृशावच्छेदकत्वमक्षतमेवेति वाच्यम्। एतल्लक्षणस्य परित्याज्यतया निखिलदोषोद्धारानावश्यकत्वेन पारिभाषिकावच्छेदकत्वं न निविष्टमित्यभिप्रायेण तद्दोषदानादिति **वदन्ति**।

**तदसत्।** तथा सत्यपि [क्रियामात्रस्य कालोपाधित्वमते] सकल-साध्याभाववन्निष्ठं कालिकसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावाद्यभाव-मादाय लक्षणसमन्वयसम्भवात्।

न च जन्यमात्रस्य कालोपाधितानये साध्याभाववति पर्वतादौ कालिकसम्बन्धेन वह्न्यभावादिसत्त्वात्तत्र तत्सम्बन्धेन तस्याभावो न वर्तत एवेति वाच्यम्। कालिकसम्बन्धेन तत्र वह्न्यभावसत्त्वेऽपि प्रतियोग्यनधिकरणी-भूतवह्निमदवयवावच्छेदेन[2] तत्र तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्यापि सत्त्वात्। एवं विशिष्टाभावस्य विशेष्याभावविशेषणाभावाभ्यामनतिरिक्तत्वे द्रव्यं

---

[1] स्वपदेन प्रमेयधूमत्वस्वीकारे स्वविशिष्टः प्रमेयधूमः, तत्संबन्धी पर्वतादिः, तन्निष्ठाभाव-प्रतियोगितावच्छेदकं घटत्वादि, प्रतियोगितानवच्छेदकं धूमत्वं, तत्कत्वं प्रमेयधूमत्वे। तत्कत्वं च तद्घटितत्वमत्र।

[2] वह्निमद्देशावच्छेदेन रा.ता.। वह्निमद्देशावच्छेदेन वह्न्यभावाभावोपपादनं तु कथमिति चिन्त्यम्। वह्निमद्देशावच्छेदेनैव वह्न्यभावस्यापि सत्त्वात्। कालिकसंबन्धमहिम्नैव तदुपपत्तेः।

विशिष्टसत्त्वादित्यादावेवाव्याप्तिसम्भवे[1] तदुपेक्ष्याभावसाध्यक-अभावहेतुक-स्थलानुधावने बीजाभावात्।

**स्वीयं समाधानम् (जगदीशस्येदम्)**

---

[1] तदुपेक्षायाः निर्बीजत्वाच्च। एतेन [पूर्वोक्तानुमानं] “विशेषणताविशेषसंबन्धेन वृत्ति-घटितसामानाधिकरण्यसंबन्धावच्छिन्नप्रतियोगिताकधूमाभावव्याप्यवान् तादृशसामाना-धिकरण्यसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावात्” इत्येतत्परम्। तत्र धूमसामाना-धिकरण्यस्य सकलसाध्याभावस्याधिकरणं हेतुरपि, तस्य धूमाधिकरणे सत्त्वात्, तत्र च हेतुभेदमादायापि न लक्षणसमन्वयसंभवः। अत्यन्ताभावमादाय तदसंभवो दर्शितरीत्या अवसेयः। इत्थं च विशिष्टाभावस्य विशेष्याभाव-विशेषणाभावाभ्यामतिरिक्तत्वेपि न दोषासंगतिरिति परास्तम्। तत्रापि कालिकसंबन्धावच्छिन्नाभावमादाय दोषवारणसंभवात्। रा.ता.। अत्र च “तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावव्याप्याभावः तत्संबन्धरूप” इति कृष्णंभट्टवचनानुसारेण धूमसामानाधिकरण्यस्य साध्याभावस्वरूपत्वमुपपादितं ताताचार्यैः। परन्तु “तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावाभावः तत्संबन्धरूप” इत्येव भीमाचार्यसंपादिते कृष्णंभट्टीये उपलभ्यते। काशीपाठे चैतदुपपादनक्लेशाभाव इति सौकर्यम्। अयं च भागः काशीपाठे उत्तरत्र किंचिद्व्यत्यासेन उपलभ्यते।

**तस्मात् प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगिवैयधिकरण्यं निविष्टं, प्रतियोगिता च हेतुतावच्छेदकसम्बन्धावच्छिन्नैव निविष्टेत्याशयेनैव तद्दोषदानम्।** हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यदाने त्वग्रिमलक्षणापेक्षया गौरवमेव एतल्लक्षणावतारे बीजं बोध्यम्।

**साध्याभावव्यापकीभूताभावप्रतियोगित्वार्थकत्वमतम् (जगदीशस्य)**

**एतेन-**

सकलशब्दस्य व्यापकतार्थकतया साध्याभावव्यापकीभूताभावप्रतियोगि-त्वमेव निष्कृष्टैतल्लक्षणार्थः। 'धूमवान् वह्नेः' इत्यादौ प्रमेयत्वादिना वह्न्यभावस्य साध्याभावव्यापकत्वेऽपि न क्षतिः, यद्रूपावच्छिन्न-प्रतियोगिताकाभावत्वं साध्याभावव्यापकतावच्छेदकं तद्रूपवत्त्वस्यैव लक्षणत्वात्। एवञ्च हेत्वभावे प्रतियोगिवैयधिकरण्यं न निवेश्यते, व्यापकतालक्षणे प्रतियोगिवैयधिकरण्या-निवेशेनाव्याप्यवृत्ति-हेतुकव्यभिचारिणि हेत्वभावस्य साध्याभाववन्निष्ठहेतुरूपा-भावप्रतियोगितया व्यापकत्वासंभवेन अतिप्रसङ्गविरहात्। व्यापकताशरीरे च हेतुतावच्छेदकसम्बन्धेन साध्याभाववन्निष्ठत्वमभावे निवेश्यं, तेन वह्न्याद्यभाववति कालिकादिसम्बन्धेन धूमादिरूपाभावस्य वृत्तावपि धूमाभावादेर्न साध्याभावव्यापकताक्षतिः।

"सत्तावान् जातेः" इत्यादौ साध्याभाववति हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्याऽव्याप्तिश्च लक्षणपञ्चक एव दोषः।

अस्तु वा हेतुतावच्छेदकसम्बन्धेन हेतुमत्ताज्ञानं प्रति यादृशसम्बन्धेन हेत्वभाववत्ताग्रहः प्रतिबन्धकस्तादृशसम्बन्धेन[1] स्वावच्छिन्नाधिकरणभिन्न-साध्याभावाधिकरणकं[2] यद्यत्स्वं तत्तद्भिन्नत्वमेव साध्याभावव्यापकताव-च्छेदकत्वम्[3]। इत्थञ्च "सत्तावान् जातेः" इत्यादावेतादृशं स्वं जातित्वाभावत्वादिकमेव, तद्भिन्नञ्च जात्यभावत्वादिकमिति लक्षणसमन्वयः। इत्थञ्च "एतद्वृक्षत्ववान् कपिसंयोगात्" इत्यादौ कपिसंयोगाभावत्वाव-च्छिन्नानधिकरणत्वाप्रसिद्ध्या कपिसंयोगाभावत्वं नैतादृशं स्वं [किन्तु तद्वृक्षत्वाभावत्वम्] इति कपिसंयोगाभावत्वस्य साध्याभावव्यापकताव-च्छेदकत्वादतिव्याप्तिवारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यविशेषणं देयमेव।

न देयमेव वा, अधिकरणत्वाभावस्यैवाधिकरणभिन्नत्वस्थाने निवेश-नीयत्वात्। कपिसंयोगाभावादेरिव तदधिकरणताया अप्यव्याप्यवृत्तितया तदभावस्य साध्याभाववति [तद्वृक्षे] सत्त्वेनातिव्याप्त्यनवकाशात्। अधि-करणत्वाभावश्च भावप्रतियोगिकतयाऽतिरिक्त एवेति विशेषणताविशेषेणैव तद्वत्त्वं साध्याभाववति विशेषणीयमिति। एवञ्च निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यादौ हेत्वाभावस्य वह्न्यादेः प्रत्येकं

---

1 धूमवान् वह्नेः इत्यत्र अतिव्याप्तिवारणाय हेतुमत्ताग्रहविरोधिता-घटकसंबन्धावच्छिन्नत्वस्य स्वावच्छिन्नाधेयतायां निवेशः।

2 स्वनिरूपिताधेयतानवच्छेदकत्वं साध्याभावाधिकरणस्य स्वपदार्थे संबन्धः।

3 यदधिकरणभिन्नं साध्याभावाधिकरणं तत्तद्भिन्नत्वं साध्याभावव्यापकत्वम्।

यावद्विपक्षावृत्तित्वेऽपि हेत्वभावत्वेन तेषां साध्याभावव्यापकत्वान्नाव्याप्तिः

**इति पूर्वपक्षोऽप्यकिंचित्करः**। यत्र यावतां साध्याभाववतां संभवः तत्र प्रातिस्विकरूपेण तत्तदधिकरणवृत्तित्वमेव हेत्वभावविशेषणतया लक्षणघटकं, न तु साध्याभावव्यापकत्वमित्यभिप्रायेणैवैतद्दोषदानात्, प्रकारान्तरानुसारेण परिष्कारे सकललक्षणानामेव परिष्कारसम्भवादिति कृतं पल्लवितेन।

[1]**परे तु** 'निर्धूमत्वव्याप्ये तत्त्वेन साध्ये' इत्यस्य सामानाधिकरण्यसम्ब-न्धावच्छिन्नप्रतियोगिताकधूमाभावव्याप्ये साध्ये तत्सम्बन्धावच्छिन्न-प्रतियोगिताकवह्न्यभावादावव्याप्तिरित्यर्थः। तत्र च हेतोरपि सकलसाध्याभाव-वदन्तर्गततया तत्र हेतुभेदासत्त्वेन न वह्न्यभावभेदमादाय लक्षणसङ्गति-रित्यव्याप्तिर्दुर्वारैव। तथाहि- सामानाधिकरण्यसम्बन्धेन पर्वतत्वादौ वर्तमानस्य वह्नेस्तादृशसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य पर्वतादौ सत्त्वेन तत्र [वह्न्यभावे] सामानाधिकरण्यसंबन्धावच्छिन्न-प्रतियोगिताक-धूमाभावासत्त्वात्[2] साध्याभावाधिकरणत्वमविवादमेवेति ध्येयमित्याहुः।

## दीधितिः

**अत्रान्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबल-लभ्यं, न हि भवति "नीलो घटो घटादन्य" इति।**

---

[1] ताताचार्यपाठे इदं महावाक्यं नास्ति। पूर्वमेव प्रकारान्तरेण उपलभ्यते।



[2] धूमाभावसत्त्वात् का. परिवर्तितः।

साध्यवद्व्यक्तिविशेषभेदमादायाव्याप्तिं परिहरति- **अत्रेति**। **साध्यवत्त्वा-वच्छिन्नप्रतियोगिताकत्वमिति**। साध्यतावच्छेदकविशिष्टसाध्यवत्त्व[1]पर्याप्त-प्रतियोगितावच्छेदकता-कत्वमित्यर्थः। तेन "वह्निमान् धूमात्" इत्यादौ तत्तद्वह्निमत्त्वा-वच्छिन्नप्रतियोगिताकभेदमादाय न दोषः, तादृशभेदप्रतियोगिताव-च्छेदकतायास्तत्ताविशिष्टवह्निमत्त्वे एव पर्याप्तत्वात्।

**व्युत्पत्तिबललभ्यम्** अन्यादिपदसमभिव्याहारलभ्यम्। नञादिपदसमभि-व्याहारज्ञानस्येव एतादृश[अन्यादि]पद-समभिव्याहारज्ञानस्याप्यन्वयिताव-च्छेदकधर्मावच्छिन्न-प्रतियोगिताकाभावशाब्दत्वावच्छिन्नं प्रत्येव जनकत्वादिति भावः। '**व्युत्पत्तिबललभ्यम्**' इत्यनेन यथाश्रुतलक्षणवाक्यार्थ एवायमिति सूचितम्। तादृशसमभिव्याहारस्थले तत्प्रतियोगिताकाभाव-मात्रबोधेऽतिप्रसङ्गं सूचयति- **न हि भवतीति**। प्रामाणिकव्यवहार इति शेषः। तथा चान्वयिप्रतियोगिकाभावमात्रबोधे नीलघटेऽपि पीतघटादिभेदसत्त्वेन तादृ-शव्यवहारोऽपि स्यादिति भावः।

'द्रव्यं न घट' इत्याद्यप्रयोगात् 'अनुयोगिता-वच्छेदकावच्छेदेनैव अन्योन्याभावादिरन्यादिपदेन प्रत्याय्यते, अनुयोगितावच्छेदकश्च प्रतियोग्य-वृत्तिरेव धर्मः' इति [2]**प्रकाशकृदङ्गीकृ**तव्युत्पत्त्यन्तरविरोधात् 'घटो घटादन्यः' इति प्रयोगवारणसम्भवात् **नील इति**।

---

[1] साध्य रा.ता.



[2] वर्धमानः प्रकाशकारः।

**घटादन्यः इत्यादौ प्राचीनमते शाब्दबोधप्रदर्शनम्**

'घटादन्यः' इत्यादौ प्राचीनमते पञ्चम्याः प्रतियोगित्वमर्थः। तत्र च प्रकृत्यर्थस्य घटत्वादिविशिष्टस्य घटत्वाद्यवच्छिन्नत्व[1]विशिष्टाधेयतासम्बन्धेना-न्वयः। अथवा केवलाधेयत्वमेव घटस्य सम्बन्धः, धर्मिपारतन्त्र्येण घटत्वादेरप्यव-च्छिन्नत्वसम्बन्धेन तत्रान्वयोपगमात्, एकविशेषणत्वेनोपस्थित-स्याप्यन्यत्र पारतन्त्र्येणान्वयस्य व्युत्पत्तिसिद्धत्वात्। प्रतियोगित्वस्य व्युत्पत्तिवैचित्र्येणान्य-पदार्थैकदेशे भेदे निरूपकतासम्बन्धेनान्वयः।

'घटान्यः' इत्यादौ च निरूपकतासम्बन्धेन घटत्वावच्छिन्नप्रतियोगिता-विशिष्टो [घटत्वावच्छिन्नप्रतियोगितानिरूपको] लक्षणया घटादिपदार्थः, तत्पुरुषस्थले पूर्वपदस्य तत्तद्विभक्त्यन्तार्थविशिष्टे लाक्षणिकत्वात्। तादृशघटादि-पदार्थस्य चाभेदसम्बन्धेन भेदेन्वयः।

**नवीनमते शाब्दबोधप्रदर्शनम्**

नवीनमते 'घटादन्यः' इत्यादावनुयोगित्वं पञ्चम्यर्थः। तत्र प्रकृत्यर्थस्य घटत्वादिविशिष्टस्य स्ववृत्तिघटत्वाद्यवच्छिन्न-प्रतियोगितानिरूपकता[2]सम्बन्धेना-न्वयः। अनुयोगिताया-श्चाश्रयतासम्बन्धेन भेदेऽन्वयः।

समासस्थले च घटत्वावच्छिन्ननिरूपितानुयोगिताविशिष्टे पूर्वपदस्य लक्षणा, तस्य चाभेदसम्बन्धेन भेदेऽन्वयः।

**अनुमितिजनकव्याप्तिज्ञानस्वरूपम्**

---

[1] सामानाधिकरण्यसंबन्धेन घटत्वावच्छिन्नत्वविशिष्टम् आधेयत्वम्।



[2] घटत्वावच्छिन्ननिरूपकताकत्वसंबन्धेन इति पा.रा.ता

अथैवं 'साध्यवदन्यावृत्तित्वम्' इत्येतादृशलक्षण-वाक्यादभेदसम्बन्धेन तादृशप्रतियोगिताविशिष्टविशेषितः तादृशानुयोगिताविशिष्टविशेषितो वा यो भेदस्तद्वदवृत्तित्वमेव प्रतीयते। तथा चानुमित्यौपयिकव्याप्तिस्वरूपजिज्ञासायां तादृशलक्षणाभिधानेऽर्थान्तरप्रसङ्गः, तादृशप्रतियोगितासम्बन्धेन तादृशानु-योगितासम्बन्धेन वा साध्यवद्विशेषितभेदवदवृत्तिताज्ञानस्यैव लाघवेनानुमिति-हेतुत्वादिति चेन्न।

यादृशव्याप्तिज्ञानमनुमितिहेतुस्तस्यामेवास्य तात्पर्यात्। [तादृशव्याप्तेः] शाब्दबोधाविषयत्वेऽपि तन्मूलकोदीच्यव्याप्ति-विषयकमानसोपनीतभानस्यैव तादृशतात्पर्यनिर्वाह्यत्वात्।

तादृशशाब्दबोधस्यापि कथञ्चिदुपपादयितुं शक्यत्वाच्च। [1]'नीलो घटः कम्बग्रीवादिमदन्यः' इत्यादिवाक्यस्याप्रमाणत्वात्, 'पटः कम्बुग्रीवादिमदन्यः' इत्यादिवाक्यस्य प्रमाणत्वादन्वयितावच्छेदकनिरूपितं पारिभाषिकमवच्छिन्नत्वं प्रतियोगितायां भासत इत्युपेयम्। अतः 'साध्यवदन्यः' इत्यादौ मतुबन्तप्रतिपाद्यतावच्छेदकस्य साध्यसम्बन्धस्य साध्यापेक्षया गुरुतया-नवच्छेदकत्वेऽपि नोक्तलक्षणवाक्यार्थासिद्धिः। पारिभाषिकं तदवच्छिन्नत्वञ्च तद्विशिष्टसम्बन्धिनिष्ठाभावीया या या प्रतियोगिता तत्तदव-च्छेदकत्वाभावकूटवदवच्छिन्नत्वम्। एतादृशावच्छिन्नत्वस्य च सम्बन्धतया निवेशात् प्रातिस्विकरूपेण तत्तत्प्रतियोगिताव्यक्तीनां दुर्ज्ञेयत्वेऽपि न क्षतिः, सम्बन्धज्ञानस्य विशिष्टबुद्धावनपेक्षितत्वात्। [तथा च साध्यवत्पदस्य स्ववृत्तिसाध्यवत्त्वावच्छिन्न-प्रतियोगितानिरूपकत्वसंबन्धेन साध्यवद्विशिष्टे निरूपके लक्षणा। तादृशनिरूपकस्य अभेदसंबन्धेन भेदे अन्वयः।]



[1] अ.नि.दीधितौ गादाधरीपुस्तके पृ. 523

अनुमितिं प्रति च साध्यावच्छिन्न-प्रतियोगिताकत्वावगाहिज्ञानमेव कारणं कल्प्यते लाघवात्, न तु साध्यसम्बन्धावच्छिन्नप्रतियोगितावगाहिज्ञानम्। अनुमित्यौपयिक-व्याप्तिशरीरे तादृश्येव प्रतियोगिता निवेश्यते। "कम्बुग्रीवादिमत्त्वान् घटात्" इत्यादौ विशेषदर्शिनामनुमितेः प्रामाणिकत्वे निरुक्तपारिभाषिकावच्छिन्नत्वमेवानुमित्यौपयिकव्याप्तिघटकम् [इत्यन्ये[1]]।

[अत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्साध्यकत्वरूपकेव लान्वयित्ववत्साध्यकस्य] तादृशगुरुधर्मावच्छिन्नसाध्यकानुमानस्य केवलान्वयिसाध्यकसम-शीलतावादिनस्तु स्वरूपसम्बन्धरूप-मेवावच्छिन्नत्वं व्याप्तिशरीरे निवेशयन्तीति समासः।

[2]मूले "केवलान्वयिन्यभावात्" इत्यादौ एतादृशलक्षणपञ्चकस्य केवलान्वयिन्यप्रसिद्धेरित्यर्थः। न च हेतुतावच्छेदकसम्बन्धेन साध्याभाव-वद्वृत्तित्वस्यावश्यं निवेशनीयतया सत्तावान् द्रव्यत्वात् इत्यादावव्याप्तिरस्तीति केवलान्वयिसाध्यक-मात्रेऽव्याप्तिकथनमसङ्गतमिति वाच्यम्। केवलान्वयिपदेन हेतुतावच्छेदकसम्बन्धेन यत्किञ्चिदधिकरणवृत्त्यभावाप्रतियोगित्वरूपकेवलान्व-यित्वाश्रयसाध्यकमात्रस्योक्तत्वात्।

---

[1] "तादृशशाब्दबोधस्यापि कथञ्चिदुपपादयितुं शक्यत्वाच्च" "अनुमितिं प्रति च साध्यावच्छिन्नप्रतियोगिताकत्वावगाहिज्ञानमेव कारणं कल्प्यते लाघवात्" इति वाक्याभ्यां प्रतिपाद्ययोः पक्षयोः भिन्नतया अन्त्यपक्षस्य अन्यमतत्वं संभाव्यते।



[2] उत्तरग्रन्थः नास्ति रा.ता.भी.

अथवा हेतुतावच्छेदसम्बन्धेन वृत्तित्वमनिवेश्य हेतुतावच्छेदक-सम्बन्धातिरिक्तो यो हेतुप्रतियोगिकः सम्बन्धस्तदन्यसम्बन्धावच्छिन्नवृत्तित्वमेव निवेश्यम्। वह्निमान् धूमादित्यादौ कालिकसम्बन्धेन धूमादेः साध्याभाव-वद्वृत्तित्वेऽपि तत्सम्बन्धस्य हेतुतावच्छेदकसम्बन्धातिरिक्तत्वाद्धेतुप्रतियोगि-कत्वाच्च लक्षणाघटकतया तदन्यसम्बन्धेन तद्वृत्तित्वाभावोऽस्त्येवेति भावः। एवञ्च "सत्तावान् द्रव्यत्वात्" इत्यादौ हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वा-प्रसिद्धावपि हेतुतावच्छेदकसम्बन्धातिरिक्तहेतुप्रतियोगिकसम्बन्धान्य-विशेषणताविशेषादिना वृत्तित्वप्रसिद्ध्या नाव्याप्तिरिति ध्येयम्।

**इतिगदाधरभट्टाचार्यरचिता**

**शिरोमणिकृतव्याप्तिपञ्चकव्याख्याया विवृतिः समाप्ता।**

# **सिंहव्याघ्रप्रकरणम्**

## **चिन्तामणिः**

**नापि साध्यासामानाधिकरण्यानधिकरणत्वं, साध्यवैयधिकरण्या-नधिकरणत्वं वा ।**

## **दीधितिः**

नापीति । **साध्यमसमानाधिकरणं यस्य, यदधिकरणानधिकरणं साध्यं तत्त्वं, साध्यनिष्ठासामानाधिकरण्य-प्रतियोगित्वम्,**

साध्यासामानाधिकरण्यानधिकरणत्वमित्येतल्लक्षणे यदि तदधिकरणा-वृत्तित्वरूपमसामानाधिकरण्यं निवेश्यते तदा द्रव्यं सत्त्वादित्यादावतिव्याप्तिः, सत्ताया द्रव्यत्वाधिकरणवृत्तितया तादृशासामानाधिकरण्यानधिकरणत्वात्। तदनधिकरणवृत्तित्वस्य असामानाधिकरण्यपदार्थत्वेऽनन्तरवक्ष्यमाणलक्षणाभेद इत्यतो व्याचष्टे- **साध्येति** ।

साध्यमसमानाधिकरणं यस्येत्यत्रासमानाधिकरणपदस्य स्वानधिकरणा-धिकरणार्थकत्वे द्रव्यं सत्त्वादित्यादावेवातिव्याप्तिः, द्रव्यत्वादेः सत्ताद्यनधि-करणाधिकरणकत्वविरहेण यत्पदेन सत्त्वादेरुपादानासम्भवात्, सत्तावान् द्रव्यत्वादित्यादावव्याप्तिश्च, सत्तादेर्द्रव्यत्वाद्यनधिकरणाधिकरणकत्वात्। अतः तदधिकरणानधिकरण(कत्व)परतया तत्पदं व्याचष्टे- **यदधिकरणेति** ।

यदधिकरणानधिकरणं साध्यं तत्त्वानधिकरणत्वस्य व्याप्तित्वे व्याप्तेर्विशिष्टैकार्थरूपतानुपपत्त्या विशिष्टपरामर्शस्यानुमितिहेतुत्वानिर्वाहः, यत्त्वतत्त्वानुगमेन तत्त्वाधिकरणत्वाभावकूटस्य निवेशनीयतया दुर्ज्ञेयत्वं गौरवञ्चेत्याशयेन यत्त्वतत्त्वाघटितं साध्यासामानाधिकरण्यपदार्थमाह-**साध्यनिष्ठेति** ।

साध्यनिष्ठं यत् 'असामानाधिकरण्यं' स्वाधिकरणीभूत-यत्किञ्चिद्व्यक्तिवृत्तित्वाभावः, 'तत्प्रतियोगित्वं' च तत्प्रतियोगिकोटि-प्रविष्टाधिकरणत्वम्।

**साध्यनिष्ठाभावीयाधेयत्वनिष्ठप्रतियोगितायां निरूपितत्वसम्बन्धेन यदवच्छेदकं तद्वृत्तित्व[स्य अनधिकरणत्व]मिति यावत्।** वह्निमान् धूमादित्यादौ साध्यनिष्ठाभावो ह्रदाधेयत्वाभावः, तदीयप्रतियोगितायामुक्तसम्बन्धेनावच्छेदको ह्रदादिः, तद्वृत्तित्वानधिकरणत्वं धूमादाविति लक्षणसमन्वयः।

अत्र साध्यनिष्ठाभावप्रतियोग्याधेयत्वं साध्यतावच्छेदक-सम्बन्धावच्छिन्नं ग्राह्यम्। अन्यथा वह्निमान् धूमादित्यादौ साध्यनिष्ठाभावीयसमवेतत्वाद्य-भावमादायानुपपत्तेः। तथा च सत्तावान् समवायित्वात् इत्यादौ साध्यनिष्ठाभावीयसमवेतत्व-निष्ठप्रतियोगितावच्छेदकीभूताधिकरणाप्रसिद्धेरव्याप्तिः, वह्निमान् धूमादित्यादावपि धूमादेरयोगोलकीयवह्न्यादि-निष्ठपर्वतादि-वृत्तित्वाभाव(स्य) प्रतियोगितावच्छेदकपर्वतादिवृत्तित्वादव्याप्तिश्च। साध्यतावच्छेदकव्यापकीभूताभावनिवेशे च गौरवमित्याशयेन फलितार्थमाह- **साध्यनिष्ठाधेयत्वेति।**

**दीधितिः**

**साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमिति यावत्, तदनधि-करणत्वमित्यर्थः।**

आधेयत्वमिह साध्यतावच्छेदकव्यापकीभूतं ग्राह्यम्। तेन वह्निमान् धूमादित्यादौ महानसादेः पर्वतीयवह्निनिष्ठाधेयत्वा-निरूपकत्वेऽपि नाव्याप्तिः।

एवं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाधेयता निवेशनीया। तेन "अयम् आत्मा आत्ममहाकालान्यतरत्त्वात्"

इत्यादौ कालस्य कालिक-सम्बन्धावच्छिन्नात्मत्वादिनिष्ठाधेयतानिरूपकत्वेऽपि नातिव्याप्तिः।

तादृशाधेयत्वानिरूपकधिकरणेत्यत्राधिकरणत्वमविवक्षितं, तदनिरूप-कत्वमात्रं निविष्टम्।

प्रथमतो द्रव्यं सत्त्वादित्यादावतिव्याप्तेराशाङ्कितया व्यभिचारिसामान्य एवातिव्याप्तिमुद्धरति- **साध्यवद्भिन्नस्येति**।

**दीधितिः**

**साध्यवद्भिन्नस्य च साध्यनिष्ठाधेयत्वानिरूपकत्वात् तद्वृत्तौ नातिप्रसङ्गः।**

[**साध्यवद्भिन्नस्येति**] व्यभिचारनिरूपकाधिकरणस्य च इत्यर्थः।

अत्राधिकरणवृत्तित्वं हेतुतावच्छेदकसम्बन्धेन ग्राह्यम्। अन्यथा वह्निमान् धूमादित्यादौ वह्निनिष्ठाधेयत्वानिरूपकस्वावयवादौ धूमादेः समवायेन वृत्तेरव्याप्त्यापत्तेः। इत्थञ्च सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः, साध्यनिष्ठा-धेयत्वानिरूपकाधिकरणे सामान्यादौ हेतुतावच्छेदकसम्बन्धात्मकसमवायादि-सम्बन्धेन वृत्तेरप्रसिद्धेः, एवं द्रव्यं विशिष्टसत्त्वादित्यादावपि विशिष्टसत्त्वादेः सत्ताद्यनतिरिक्ततया साध्यनिष्ठाधेयत्वानिरूपकाधिकरणगुणादिवृत्तित्वानधि-करणत्वासम्भवादव्याप्तिः इत्यतो निष्कृष्टार्थमाह- **साध्यनिष्ठेति**।

**दीधितिः**

**साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधि -करणतासामान्यकत्वमिति निष्कर्षः। तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः।**

अत्रपि पूर्वदोषवारणाय साध्यतावच्छेदक-सम्बन्धावच्छिन्नत्वेनाधेयत्वं निवेशनीयम्। एवमधिकरणत्व-मप्यविवक्षितम्, तादृशाधेयत्वानिरूपकत्व-व्यापकतैवाभावे निवेशनीया, तादृशाधेयत्वानिरूपकवृत्तित्वमात्रनिवेशे धूमवान् वह्नेरित्यादौ वह्न्यधिकरणत्वसामान्याभावस्य साध्यनिष्ठधेयत्वा-निरूपकह्रदादि-वृत्तित्वादतिव्याप्तिरतो व्यापकतानिवेशः।

व्यापकत्वञ्च तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वम्, न तु तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वम्, सर्वस्यैव तथाविधद्वित्वावच्छिन्नाभावप्रति-योगितया तदप्रसिद्धेः। न वा तद्वन्निष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वं, तादृशप्रतियोगिता-नवच्छेदकीभूताभावत्वादिकमादाय वह्न्यधिकरणत्वसामान्या-भावस्यापि धूमनिष्ठाधेयत्वानिरूपकत्व[1]व्यापकतया धूमवान् वह्नेरित्यादावति-व्याप्त्यापत्तेः।

अनवच्छेदकत्वञ्चावच्छेदकतापर्याप्त्यनधिकरणत्वम्, अतो नोभयवद्भेदमादाय दोषः।

अथवा यदधिकरणतासामान्याभावत्वं साध्यनिष्ठाधेयत्वा-निरूपकवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकं तत्त्वमेव समुदायार्थः, अतोऽभावत्वादिना व्यापकतामादाय न दोषः।

अधिकरणता च हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, तेन वह्निमान् धूमादित्यादौ वह्न्यनधिकरणधूमावयवादौ धूमाधिकरणत्व-सामान्याभावासत्त्वेऽपि न क्षतिः। धूमवान् वह्नेरित्यादौ



[1] धूमानधिकरणत्व रा.ता.

यत्किञ्चिद्वह्न्यधिकरणत्वाभावस्य धूमानधिकरणताव्यापकतया अतिव्याप्तिवारणाय **सामान्यपदम्**।

**तथा च तादृशाधेयत्वानिरूपकत्व-व्यापकाभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नाधिकरणतात्वं, यद्रूपावच्छिन्नाधिकरणतात्वावच्छिन्नाभावत्वं वा तादृशधेयत्वा-निरूपकत्वव्यापकतावच्छेदकं तद्रूपवत्त्वं व्याप्तिरिति** फलितार्थः। तेन धूमानधिकरणत्वव्यापकीभूतवह्न्यधिकरणत्व-धूमाधिकरणत्वोभय-सामान्याभा-वप्रतियोगितायाः वह्न्यधिकरणत्वसामान्यनिष्ठत्वेऽपि नातिव्याप्तिः।

यदधिकरणतामात्रनिवेशे द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात् इत्यादावव्याप्तिः, द्रव्यत्वानधिकरणगुणादौ हेत्वधिकरणता-त्वावच्छिन्नाभावा-सत्त्वात्। अतो **यद्रूपावच्छिन्नेति**।

हेत्वभावस्य व्यापकतानिवेशे[कल्पे तु] व्यापकताशरीरे हेतुतावच्छेदक-सम्बन्धावच्छिन्नं तद्वन्निष्ठत्वं निवेश्यम्, अन्यथा वह्निमान् धूमादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे ह्रदादौ धूमात्मकाभावस्य कालिकसम्बन्धेन वृत्तेरव्याप्त्यापत्तेः। तथा च सति सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः, साध्यनिष्ठाधेयत्वा-निरूपकाधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धेः। अतो हेत्वधिकरणत्वाभावस्य व्यापकताघटितमेव तल्लक्षणं कृतम्। तथा चाधिकरणताया विशेषणताविशेषेण वृत्तिमत्तया तेन सम्बन्धेन तद्वन्निष्ठत्वं निवेश्यम्, अतो न दोषः।

पूर्वकल्पपरित्यागे बीजमाह- **तेनेति**। **न दोष इति**। सामान्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धावपि तत्सम्बन्धावच्छिन्नाया द्रव्यत्वा-धिकरणताया द्रव्ये प्रसिद्धाया अभावस्य साध्यनिष्ठाधेयत्वानिरूपकाधि-करणत्वव्यापकत्वादिति भावः।

## व्याप्तिलक्षणम्

**एतल्लक्षणद्वयखण्डनम्**

साध्यवैयधिकरण्यस्य निरुक्तार्थकत्वे पुनः पौनरुक्त्यमतस्तद्व्याचष्टे- **साध्यवैयधिकरण्यमिति** ।

### दीधितिः

**साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणकत्वम् । चरमाधिकरणत्वांशस्य अनतिप्रयोजनकतया तदपहाय द्वयमेकोक्त्या अनूद्य दूषयति-** तदुभयमपीति ।

### मणिः

### तदुभयमपि साध्यानधिकरणानधिकरणत्वम् ।

### दीधितिः

**साध्येत्यादेः साध्यं यदधिकरणानधिकरणं तत्त्वाभावः [अर्थः],.....**

ननु मूले **तेदुभयमपि**' '**साध्यानधिकरणानधिकरणत्वम्**' इत्यनेनोक्त-लक्षणद्वयार्थानुवादोऽसङ्गतः, असामानाधिकरण्य-वैयधिकरण्ययोरधिकरणता-द्वयघटितत्वेन तादृशलक्षणयोरधिकरणतात्रयघटितत्वात्, अनुवादे चाधिकरणताद्वय-मात्रस्य निवेशादित्यतस्तादृशमूलं सङ्गमयति- **चरमाधि-करणत्वांशस्येति** । **अनतिप्रयोजनकतयेति** । अनधिकरणत्वस्या-धिकरणत्वाभावरूपतया तद्घटकाधिकरणत्वांशं परित्यज्य साध्यासामानाधिकरण्याभाव-साध्यवैयधिकरण्याभाव-निवेशेनैवो-पपत्तेरिति भावः । असामानाधिकरण्याद्यधिकरणत्वाभावस्याखण्डस्य असामानाधिकरण्याद्यभावाघटिततया न वैयर्थ्यमिति

**'अनतिप्रयोजनकतया'** इत्युक्तम्। **'तदपहाय'** चरमाधिकरणत्वांशं परित्यज्य। **'द्वयं'** साध्यासामानाधिकरण्याभाव-साध्यवैयधिकरण्याभावरूपनिष्कृष्ट-लक्षणार्थद्वयम्।

**'साध्यानधिकरणानधिकरणत्वम्'** इत्यनेन सत्तावान् द्रव्यत्वादित्यादावव्याप्तिवारणाय विवक्षितस्य प्रथमलक्षणनिष्कृष्टार्थस्य कथञ्चिदपि प्रतिपादनासम्भवात्तदनुवादकतानुपपत्तिरिति यथाश्रुतार्थानुवाद-परतया सङ्गमयितुमनुवादनीयलक्षणद्वयार्थमाह- **साध्येत्यादेरिति**। **लक्षणद्वयस्य क्रमेण** इति शेषः।

**'तत्त्वाभावः'** इत्यन्तेन प्रथमलक्षणार्थकथनम्। एवञ्च साध्याधिकरणानधिकरणशब्देन साध्यं यदधिकरणानधिकरणकं तद्बोध्यते। तदुत्तरत्वप्रत्ययेन तत्त्वं, साध्यपदोत्तरसन्निकृष्टनञा तदभावः प्रत्याय्यत इति प्रथमलक्षणार्थबोधकत्वं साध्यानधिकरणानधिकरणत्वमित्यस्य।

न च साध्याधिकरणानधिकरणत्वपदेन नञ्पदसमासे सत्येव तदर्थाभावो नञा प्रत्याययितुं शक्यते, तथा च साध्यपदोत्तरनञ्निपातोऽसम्भवी, समस्यमानपूर्वनिपातितस्यैव नञः साधुत्वात्। अन्यथा अचित्रगुः इत्यादौ चित्रादिपदोत्तरमपि नञ्निपातापत्तेरिति वाच्यम्। ससम्बन्धिकार्थबोधकोत्तर-पदघटितसमुदायेन समं नञ्समासस्थले नञो मध्यनिवेशस्यापि साधुतासम्पादकत्वात्। अन्यथा घटानधिकरणत्वं, साध्याभाववदवृत्तित्वमित्यादौ (च) घटाधिकरणत्वाभाव-साध्याभाववद्वृत्तित्वाभावप्रत्ययानुपपत्तेः। न हि तत्रानधिकरणत्वादि-पदानां घटादिपदैः समासे तादृशार्थप्रतीतिरुपपद्यते। अनधिकरणत्वपदादिपदजन्यप्रतीतिविशेष्यीभूताभावेन सममेव घटादिसंसर्ग-भानात्, समस्यमानपदप्रतिपाद्यतावच्छेदक-कोटिनिविष्टेन अपरपदार्थान्वये राजपुरुषादन्य इत्यर्थे राजापुरुषः

इत्यादिसमासापत्तेः[1]। एवं नञा अन्वयितावच्छेदकावच्छिन्नाभावस्यैव बोधनात् अधिकरणसामान्यभेदवानेव अनधिकरणपदार्थः स्यात्, तस्य चाप्रसिद्ध्या[2] नञ्पद-अधिकरणपदयोः प्राथमिकसमासासंभवाच्चेति।

साध्यनिष्ठधेयत्वानिरूपकाधिकरणवृत्तित्वाभावरूपः प्रथमलक्षणस्य निष्कृष्टयथाश्रुतार्थोपि साध्यानधिकरणानधिकरणत्वमिति शब्देन प्रतिपाद्यते। तथाहि- आधेयतानिरूपकार्थकचरमाधिकरणपदघटितेन अधिकरणानधिकरणपदेन स्वाधिकरणम् अनधिकरणम् आधेयत्वानिरूपकं यस्येति व्युत्पत्त्या अधिकरणनिष्ठभेदप्रतियोगितावच्छेदकीभूतनिरूपकताकाधेयतावत्त्वेनान्यपदार्थो बोध्यते। बहुव्रीहौ विग्रहवाक्यात् यादृशविशेषणविशेष्यभावापन्नस्य बोधस्तद्विपरीतविशेषणविशेष्यभावापन्नस्य प्रत्ययात्, चित्रा गौर्यस्येति विग्रहवाक्याद्यत्पदार्थसम्बन्धित्वेन चित्रगोः, चित्रगुरित्यतश्चित्रगोनिष्ठसम्बन्ध-प्रतियोगित्वेन यत्पदार्थस्य बोधनात्। प्रकृतस्थले च विग्रहवाक्यादन्यपदार्थनिष्ठाधेयतानिरूपकत्वावच्छिन्नभेदवत्त्वेनाधिकरणप्रतीतेः।

---

[1] इदं तु न समीचीनम्। द्वयोः पदयोस्समासानन्तरं तत्र मध्ये नञो निपातासंभवात्। घटानधिकरणम् इत्यादौ तु प्रथमतः न अधिकरणम् अनधिकरणम् इति समासः, ततः घटस्यानधिकरणम् इत्येवं समासेन पूर्वनिष्पन्नाव्ययीभावसमासे घटपदस्यान्तर्भावो नास्तीति नानुपपत्तिः।

[2] इदमप्यसमीचीनम्। न ह्यर्थाबाधः समासप्रयोजकः, शशविषाणादिसमासासंभव-प्रसङ्गात्, किन्तु सामर्थ्यमेव। तथा च अनधिकरणत्वमिति समासस्साधुरेव।

एवं च साध्यं यदधिकरणानधिकरणं यदधिकरणनिष्ठ-भेदप्रतियोगितावच्छेदकीभूतनिरूपकताकाधेयतावदिति व्युत्पत्त्या साध्यनिष्ठाधेयतानिरूपकत्वावच्छिन्नभेदवदधिकरणवृत्तित्वं साध्याधिकरणा-नधिकरणशब्देन प्रत्याय्यते, तदभावश्च साध्यपदोत्तरनिविष्टनञ्पदघटित-वाक्येनेति ।

**चिन्तामणिः**

**तच्च तत्र, यत्किंचित्साध्यानधिकरणाधिकरणे धूमे चाप्रसिद्धम् ।**

**दीधितिः**

**[साध्येत्यादेः..] साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावश्चार्थः ।**

तत्र **केवलान्वयिनि साध्यनिष्ठधेयत्वानिरूपकाधिकरणाप्रसिद्ध्या, नानाव्याक्तिसाध्यके च एकसाध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वं साधना-धिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः ।**

द्वितीयलक्षणार्थमाह- **साध्यस्येति** । तथा च साध्यानधिकरणम् अधिकरणम् आधेयतानिरूपकं यस्येति व्युत्पत्त्या साध्यानधिकरणाधि-करणत्वशब्देन साध्यानधिकरणवृत्तित्वं प्रत्याय्यते तदभावश्च द्वितीयनञेत्युक्तशब्दस्यैतदर्थानुवादकतेति भावः । पूरणसंवलितं तेत्र' इतिग्रन्थं व्याचष्टे- **तत्रेत्यादिना** । मूले केवलान्वयिनि, वह्निमान् धूमादित्यादौ चाव्याप्तेर्हेत्वकथनात्प्रथमलक्षणे केवलान्वयिन्यव्याप्तिहेतुं पूरयति- **साध्ये**त्यादिनाऽ**प्रसिद्ध्ये**त्यन्तेन । साध्यनिष्ठाधेयतानिरूपकसामान्य-भेदनिवेशाभिप्रायेण इयमप्रसिद्धिरभिहिता ।

यत्किञ्चिन्निरूपकभेदनिवेशे च तादृशभेदवदधिकरणे हेतोर्वृत्तेरव्याप्तिर्बोध्या।

वक्ष्यमाणक्रमेण नानाव्यक्तिसाध्यकहेत्वन्तरेप्यव्याप्तिसत्त्वात् धूममात्रे तत्कथनं मूलकृतो न्यूनतासंपादकम्। अतो धूम इत्यस्य उपलक्षणत्वाभिप्रायेण पाठमधृत्वैव व्याचष्टे- **ननाव्यक्तिसाध्यकेति।** अत्र च यथासंभवमव्याप्तिर्बोध्या। तेन एतद्वृत्तियावद्धर्मवावन् एतत्त्वात् इत्यादौ वक्ष्यमाणरीत्याऽव्याप्तिविरहेऽपि न क्षतिः। अत एवाग्रे नोनाधिकरणके सर्वत्र' इति वक्ष्यति।

अथवा नोनाव्यक्तिसाध्यके' इत्यस्य मिथो व्यधिकरणद्वय-वृत्तिसाध्यतावच्छेदकक इत्यर्थः। अत्राव्याप्तेर्हेतुं पूरयति- **एकसाध्येत्यादिना इतीत्यन्तेन**। अनया रीत्याऽव्याप्तिश्च यत्किञ्चित्साध्यनिष्ठाधेयता-निरूपकत्वावच्छिन्नभेदनिवेशाभिप्रायेण, साध्यनिष्ठाधेयतानिरूपक-सामान्यभेदनिवेशे च केवलान्वयिन्यव्याप्तिरेव दोष इति ध्येयम्।

## दीधितिः

**क्वचिद्व्यभिचारिण्यतिप्रसङ्गश्चाद्ये।**

**क्वचिदिति।** पृथिव्यन्यत्वविशिष्टद्रव्यत्ववत् द्रव्यत्वात् इत्यादौ। **अतिव्याप्तिरिति।** विशिष्टस्य द्रव्यत्वानतिरेकितया पृथिव्यादेः साध्यनिष्ठधेयत्वानिरूपकत्वासम्भवादिति भावः। आधेयतायां साध्यताव-च्छेदकावच्छिन्नत्वनिवेशे च नैष दोषः, अधिकरणतानिरूपकताव-च्छेदकस्यैवाधेयतावच्छेदकतया पृथिवीनिष्ठाधिकरणतानिरूपकतानवच्छेदक-पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वादेः पृथिवीनिरूपिताधेयतानवच्छेदकत्वादिति ध्येयम्।

द्वितीयलक्षणे साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदनिवेशे च धूमादौ नाव्याप्तिः, अतस्तत्कल्पे केवलान्वयिसाध्यकाव्याप्तिरेव। यत्किंचित्साध्य-वद्व्यक्तिभेदनिवेशे चोभयस्थल एवाव्याप्तिरिति मूलाभिप्रायं स्फुटयति- **द्वितीये चेत्यादिना**।

**दीधितिः**

**द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदो विवक्षितस्तदा केवलान्वयिनि, यदि च यत्किञ्चित्साध्यवद्व्यक्तिभेदस्तदा नानाधिकरणसाध्यके सर्वत्राव्याप्तिः।।**

साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदः साध्यवैयधिकरण्ये विवक्षितः = ([1]इति योजना), साध्यवैयधिकरण्यघटकतया विवक्षित इत्यर्थः। **केवलान्वयिनि**' केवलान्वयिन्येव। **नानाधिकरणकेति।** एकव्यक्तिसाध्यकेऽपि सत्तावान् द्रव्यत्वादित्यादावेकस्य साध्यवतो भेदस्यान्यस्मिन् साध्यवति सत्वादव्याप्तेः, नानाव्यक्तिसाध्यकेऽपि एतद्वृत्तिधर्मवान् एतत्त्वात् इत्यादावव्याप्त्यसम्भवात् **नानाव्यक्तिसाध्यकेति** नोक्तम्। तथा च द्वितीयलक्षणाभिप्रायेण धूम इति मूलं नानाधिकरणसाध्यकसामान्योपलक्षणमिति भावः।।

**इति सिंहव्याघ्रलक्षणे समाप्ते।**

---



[1] का.पाठे।

# सार्वभौमलक्षणम्

'साध्यासामानाधिकरण्यानधिकरणत्वम्' इत्यत्र साध्या-सामानाधिकरण्यपदेन साध्याधिकरणवृत्तित्वाभावविवक्षणेऽपि द्रव्यं सत्त्वात् इत्यादावतिव्याप्तिर्न सम्भवति, सामानाधिकरण्यस्याव्याप्यवृत्तितया सत्तायामपि गुणाद्यवच्छेदेन द्रव्यत्वादिसामानाधिकरण्याभावसत्त्वात्। किन्तु वह्निमान् धूमादित्यादावव्याप्तिः, स्वावयवाद्यवच्छेदेन धूमादावपि वह्न्यादि-सामानाधिकरण्याभावसत्त्वात्। सापि हेतुतावच्छेदकसम्बन्धेन यद्धेतुमत् तदवच्छिन्नत्वेनाभावं विशेष्य वारयितुं शक्यते इत्यभिप्रायेण तत्पदं तादृशाभावपरतया वर्णयतः सार्वभौमस्य मतमुपन्यस्यति- **केचित्त्विति**।।

**दीधितिः**

**केचित्तु साध्यासामानाधिकरण्यं = हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे तेनैव संबन्धेन साध्यवद्वृत्तित्वाभावः, तदधिकरणभिन्नत्वमर्थः। तेन धूमस्य स्वावयवे संयोगेन..... [अवृत्तावपि न क्षतिः।]**

'**हेत्वधिकरणे**' इति सप्तम्यर्थोऽभावान्वितमवच्छिन्नत्वम्। '**तेनैव सम्बन्धेन**' इति तृतीयार्थोऽपि वृत्त्यन्वितमवच्छिन्नत्वम्। वृत्तिपदस्य सम्बन्धार्थकत्वे तु अभेद एव तदर्थः।

अनधिकरणत्वपदस्याधिकरणत्वाभावः अभावमात्रं वा यद्यर्थः स्यात्तदाऽव्याप्यवृत्त्यधिकरणताया अप्यव्याप्यवृत्तितया सत्तादौ द्रव्यावच्छेदेन साध्यसामानाधिकरण्याभावाधिकरणत्वाभावस्य सामानाधिकरण्यरूपतद-भावाभावस्य च अक्षतत्वादतिव्याप्तिस्तदवस्थैव इत्यनधिकरणपदम् अधिकरणभेदवदर्थकतया व्याकरोति- **तदधिकरणेति**।

यद्यपि अधिकरणभेदेनाभावभेदाभावात्संयोगादिना धूमाद्यधिकरण-पर्वताद्यवच्छिन्नो यः सम्बन्धान्तरेण तद्वृत्तिरूपादिनिष्ठवह्न्यादिमत्संयुक्तत्वा-भावः, तस्यैव स्वावयवावच्छेदेन धूमादौ वर्तमानतया धूमादेस्तादृशाभावा-नधिकरणत्वं दुर्घटम्। तथापि **तादृशहेत्वधिकरणावच्छिन्नत्वविशिष्टाभावा-नधिकरणत्वस्यैव विवक्षणीयतया न दोषः**। "रूपे पर्वते न वह्निमत्संयुक्तत्वम्" इतिप्रतीतिवद् "धूमे पर्वते न वह्निमत्संयुक्तत्वम्" इतिप्रतीत्यनुदयात् पर्वतावच्छिन्नत्वविशिष्टनिरूपितायाः वह्निमसंयुक्तत्वाभावीय-विलक्षणा-धिकरणतायाः रूपादावेवोपगमात्।

अभावाधिकरणतायामेव वा अधिकरणविशेषावच्छिन्नत्वं निवेशनीयं, तावतापि धूम-रूपयोरभिन्नस्याप्यभावस्य परस्परानवच्छेदकावच्छिन्ना-धिकरणताभेदेन कथितदोषनिराकरणसम्भवात्।

उभयत्र हेतुतावच्छेदकसम्बन्धप्रवेशप्रयोजनं क्रमेण दर्शयति- **तेनेति**। **स्वावयवे संयोगेनावृत्तावपी**त्यन्वयः। तथा च स्वावयवावच्छेदेन साध्यवत्संयुक्तत्वाभावसत्त्वेन तदभावस्याक्षततया प्रथमतो हेतुतावच्छेदक-सम्बन्धानिवेशे स्वावयवरूपस्वाधिकरणावच्छिन्नसाध्यवत्संयुक्तत्वाभावा-नधिकरणत्वविरहेण संयोगेन धूमहेतौ कस्यापि साध्यस्य व्याप्तिर्न स्यादिति भावः।

यद्यपि तादृशसम्बन्धनिवेशेऽपि वह्निमत्संयुक्तत्वादेः कालिकाव्याप्य-वृत्तितया धूमादावुत्पत्तिकालावच्छेदेन वह्निमत्संयुक्तत्वाभाववृत्तेः पर्वतादेरपि कालोपाधितया तादृशाभावावच्छेदकत्वादव्याप्तितादवस्थ्यम्, तथापि इदानीमिति प्रतीतिनियामककालस्यावच्छेदकत्वात् इहेतिप्रतीतिनियामकदेशनिष्ठावच्छेदक-तायां वैलक्षण्यं दुरपह्नवं,

यदभावात् “पर्वते धूमे न वह्निमत्संयुक्तत्वम्” इतिप्रत्ययाभावः हेतुमन्निष्ठतादृशावच्छेदकतानिरूपकत्वमेव निवेश्यम्, अतो न दोषः।

न च कालोपाधेरवच्छेदकतायामवच्छेद्याधिकरणेनावच्छेदकस्य कालिकसम्बन्धो नियामकः, इत्थं च तादृशसम्बन्धेनानवच्छिन्नत्वमेव देशस्यावच्छेदकतायां वैलक्षण्यम्, अन्यस्य दुर्वचत्वात्। तथा च व्यभिचारिणि [महाकालान्यो घटात् इत्यादौ] कालिकादिसंबन्धेन हेतौ वर्तमाने साध्यसामानाधिकरण्याभावे व्यभिचारनिरूपकाधिकरणीयावच्छेदकतायां कालिकसंबन्धानवच्छिन्नत्वविरहादतिव्याप्तिरिति वाच्यम्। कालिकव्याप्यवृत्तावपि कालिकसंबन्धघटितात्मत्वाकाशत्वादिसामानाधिकरण्ये दैशिकसंबन्धेन आत्मत्वाद्यनधिकरणकालस्य देशविधयैवावच्छेदकत्वात्, कालविधया तस्यावच्छेदकत्वे तादृशसामानाधिकरण्यस्य कालिकाव्याप्यवृत्तित्वापत्तेः, कालिकसंबन्धानवच्छिन्नत्वादन्यस्यैव वैलक्षण्यस्य देशविधया अवच्छेदकतायां स्वीकरणीयत्वात्।

**हेत्वधिकरणे** इत्यत्र हेतुपदम् अधिकरणभिन्नत्वानुयोगितत्तद्धेतुपरम्, अतो धूमाद्यन्तरसंयुक्तस्वावयवावच्छेदेन धूमादेस्तादृशाभाववत्त्वेपि न क्षतिः। एवं च व्याप्तेः प्रतिधूमादिकं भिन्नत्वेपि [अन्यतमत्त्वादिना] केनापि रूपेणानुगतानां तासां धूमत्वादिमवच्छेदकम्।

**यत्तुमतनिरासः**

यत्तु हेतुपदं हेतुतावच्छेदकावच्छिन्नपरमेव। हेतुतावच्छेदकसंबन्धेन स्वानुयोगिनो यदधिकरणं तदनवच्छिन्ना या

या अधिकरणता [तत्तदन्या या साध्यासामानाधिकरण्याभावाधिकरणता तद्भदन्यत्त्वं व्याप्तिरिति रीत्या] तत्तदन्यत्त्वेन साध्यसामानाधिकरण्याभावाधिकरणतायाः विशेषणीयत्वात् नोक्तदोषः, न वा अननुगमः।

एवं च कालोपाधिविधया हेत्वधिकरणस्य देशस्यावच्छेदकत्वेन उक्तदोषस्य अनवच्छिन्नत्वप्रतियोगिकोटौ हेतुतावच्छेदकसंबन्धावच्छिन्नाव-च्छेदकत्वनिवेशेनापि वारणसंभवः। पर्वतरूपादौ हेतुतावच्छेदकसंबन्धावच्छिन्न-पर्वतादिनिष्ठावच्छेदकताकसाध्यसामानाधिकरण्याभाववत्त्वाप्रसिद्धाव पि रूपादि-निष्ठनिरुक्ताधिकरणतायां धूमादिप्रसिद्धनिरुक्ताधिकरणतानां भेदस्याक्षततया तद्भदन्यत्त्वेन धूमादौ लक्षणसमन्वयात् इति।

तन्न साधु। तथा सति किंचेत्याद्यग्रिमदोषासंगतेः[1]। [कालत्ववान् घटात् इत्यत्र] गगननिष्ठसाध्यसामानाधिकरण्याभावाधिकरणतायाः एवोक्ताधिकरणता-भिन्नायाः प्रसिद्धेः।

**दीधितिः**

**[तेन धूमस्य स्वावयवे संयोगेन] वह्निमति च समवायेनावृत्तावपि न क्षतिः।**

---

[1] किञ्च इदमिदानीम् इतिप्रतीतिनियामकविशेषणताविशेषेण हेतुतायां [कालत्ववान् घटात् इति] सद्धेतावव्याप्तिः। तेन सम्बन्धेनाधिकरणे काले तेन सम्बन्धेन साध्यवद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः। इत्यग्रिमदीधितिः पृ.54.

**वह्निमति चेति**। तथा च तेनैव संबन्धेनेत्यनुक्त्वा यत्किंचित्संबन्धेनेत्युक्तौ पर्वताद्यवच्छिन्नवह्निमत्संयुक्तत्ववत्यपि तदवच्छिन्नवह्निमत्समवेतत्वाभावसत्त्वात् धूमस्य वह्निव्याप्यत्वं नोपपद्यते इति भावः। साध्यवत्संबद्धत्वसामान्याभावनिवेशे वह्निमत्समवेतत्वाभावस्य लक्षणाघटकत्वेपि हेत्वधिकरणविशेषावच्छिन्नसाध्य-वत्संबद्धत्वसामान्याभावस्याप्रसिद्ध्या असंभवो बोध्यः, साध्यवदसंबद्धस्य हेतुमति संबन्धासंभवात् अवच्छेद्याधिकरणसंबन्धिन एवावच्छेदकतया तन्निष्ठाभावे हेतुमतोनवच्छेदकत्वात्। **न क्षतिरिति**। नाव्याप्तिर्नासंभवश्चेत्यर्थः।

साध्यवत्ता च साध्यतावच्छेदकसंबन्धेन बोध्या। तेन समवायेन वह्नौ साध्ये संयोगेन धूमे हेतौ [समवायेन वह्निमान् संयोगेन धूमात् इति व्यभिचारिणि] पर्वताद्यवच्छिन्नवह्निमद्वृत्तित्वसामान्याभावासत्त्वेपि नातिव्याप्तिः, न वा सद्धेतावपि यत्किंचित्संबन्धेन यः साध्यवान् तद्वृत्तित्वाभावस्य स्वाधिकरणावच्छेदेन सत्त्वेपि न दोषः। साध्यवत्त्वं च उपलक्षणविधया अभावप्रतियोगितावच्छेदकोटौ निवेशनीयम्, न तु विशेषणविधया, तेनोत्पत्तिक्षणाद्यवच्छिन्नघटादौ गन्धाद्यसत्त्वात् तादृशघटाद्यवच्छेदेन पृथिवीत्वादौ गन्धादिविशिष्टवृत्तित्वाभावसत्त्वेपि "गन्धवान् पृथिवीत्वात्" इत्यादौ, मूलावच्छिन्नवृक्षादौ कपिसंयोगाद्यसत्त्वात् तादृशवृक्षाद्यवच्छेदेन एतद्वृक्षत्वादौ कपिसंयोगादिविशिष्टवृत्तित्वाभावसत्त्वेपि "कपिसंयोगी एतद्वृक्षत्वात्" इत्यादौ वा नाव्याप्तिः। तत्तत्कालदेशावच्छिन्नतत्तदधिकरणावच्छेदेनापि तत्र तत्र हेतौ तादृशसाध्योपलक्षितधर्मिवृत्तित्वसत्त्वात्।

न चैवमपि धूमादौ पर्वतवृत्तेरनवच्छेदको यो देशः कालो वा तदवच्छिन्नपर्वताद्यवच्छेदेन वह्न्यादिमद्वृत्तित्वाभावस्य धूमादौ सत्त्वादव्याप्तिर्दुर्वारैवेति वाच्यम्।

तत्तद्देशकालावच्छिन्नपर्वतादेर्धूमाद्यसंबन्धितया धूमादावभाववृत्तावपि तादृशस्यानवच्छेदकत्वात्।

न चैवम् 'उत्पत्तिक्षणविशिष्टपर्वते धूमस्य न वह्निमत्संयुक्तत्वम्' इत्यादिप्रतीत्यनुपपत्तिः, 'द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यम्' इत्यादिवदुक्तप्रतीतेः सामानाधिकरण्यावच्छेदकत्वाभावावलम्बनता न संभवति, विशेष्यस्यावच्छेदकत्वे विशिष्टस्यानवच्छेदकत्वासंभवात् इति वाच्यम्। तादृशप्रतीतीनां सामानाधिकरण्ये विशिष्टपर्वताद्यवच्छेद्यत्वाभावाव-गाहितयैवोपपत्तेः।

उत्पत्तिक्षणे पर्वते धूमस्य न वह्निमत्संयुक्तत्वम् इत्यादौ पर्वतावच्छिन्नं यत् धूमस्य वह्निमत्संयुक्तत्वं तस्योत्पत्तिक्षणो नावच्छेदकः इत्यादिरप्यर्थः संभवति।

धूमनिष्ठवह्निमत्संयुक्तत्वाभावे उत्पत्तिक्षणपर्वतोभयावच्छिन्नत्वं तु नार्थः। पर्वतस्य प्रतियोग्यवच्छेदकतया तदन्तर्भावेण द्वयोरभावावच्छेदकत्वस्यासंभवात्, घट-पटयोर्घटत्वाभावाधिकरणतावत्।

एतेन उक्तोभयावच्छिन्नसाध्यसामानाधिकरण्याभावव्यावर्तनाय हेत्वधिकरणमात्रावच्छिन्नत्वप्रवेशनं केषांचिदनुपादेयमेव। तथा सति वह्न्यादिनिष्ठधूमसामानाधिकरण्याभावस्यापि अयोगोलक-स्वावयवोभयाव-च्छिन्नतया हेतुतावच्छेदकसंबन्धेन हेतुमन्मात्रानवच्छेद्यतया अतिव्याप्तिप्रसङ्गाच्च।

**केचित्तु**- विशिष्टपर्वतादेरवच्छेदकतामादायाव्याप्तिवारणाय अवच्छेदकान्तरानवच्छिन्नहेत्वधिकरणावच्छिन्नत्वम् अभावे निवेशनीयम्।

एवं च पर्वतादेः कालविधया धूमनिष्ठवह्निमत्संयुक्तत्वाद्यभावाव-च्छेदकत्वस्यापि व्यावृत्तिः,

पर्वतादेः स्थूलकालतया वह्निमत्संयुक्तत्वादिरूपप्रतियोगिनोप्यवच्छेदकत्वात् तन्निष्ठाभावावच्छेदकताया अविरोधाय अवान्तरकालावच्छिन्नत्वोपगमात् इत्याहुः।

**दीधितिः**

**तादृशाभावश्च संबन्धान्तरेण वर्तमाने तत्रैव सुलभः।**

हेतुमदसंबद्धे साध्यसामानाधिकरण्याभावस्य उक्तयुक्त्या हेत्वधिकरणावच्छिन्नत्वविरहात् हेतुतानवच्छेदकसंबन्धेन हेतुमत्संबद्धे हेतुमदवच्छिन्नतादृशाभावप्रसिद्धिमाह- **तादृशेति।** हेतुतावच्छेदकसंबन्धेन साध्यवद्वृत्तित्वस्य तेनैव संबन्धेन हेतुमदवच्छिन्नाभावश्चेत्यर्थः। **तत्रैव** तादृशहेतुमत्येव।

न च तथाविधरूपादौ वह्निमत्संयुक्तत्वाभावो व्याप्यवृत्तिरेवेति तत्राधिकरणविशेषस्यावच्छेदकत्वं निर्युक्तिकम्, प्रतियोगिमति अभाववृत्तावेव विरोधभञ्जनार्थमवच्छेदकभेदापेक्षणात्, धूमवत्कपालादिसमवेत एव वह्निमन्महानसादिसंयुक्तघटादौ महानसाद्यवच्छेदेन वह्निमत्संयुक्तत्ववति हेतुमत्कपालाद्यवच्छेदेन वह्निमत्संयुक्तत्वाभावसौलभ्येपि "एतद्रूपवान् एतद्रसात्" इत्यादौ एतद्रूपादिमत्समवेतत्ववति हेत्वधिकरणावच्छेदेन प्रतियोगिसत्त्वात् तदवच्छेदेन साध्यसामानाधिकरण्याभाववृत्त्यसम्भवात्। एतद्रूपादिमति सम्बन्धान्तरेण वर्तमाने साध्यवत्समवेत्वाभावस्य व्याप्यवृत्तितया हेत्वधिकरणानवच्छिन्नत्वात् निरुक्ताभावाप्रसिद्धेर्दुर्वारत्वादिति वाच्यम्। "पर्वते रूपे न वह्निमत्संयुक्तत्वम्" इतिप्रतीतिबलेन व्याप्यवृत्तेरपि सामानाधिकरण्याभावस्याधिकरणविशेषावच्छिन्नत्वोपगमात्।

**यत्तु**- व्याप्यवृत्तेरभावस्याधिकरणविशेषावच्छिन्नत्वानुपगमे हेतुता-वच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावाधिकरणतासामान्ये हेत्वनु-योगिकत्व-हेत्वधिकरणविशेषावच्छिन्नत्व-उभयाभावो विवक्षणीयः। [तथा च हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावाधिकरणतासामान्ये हेत्वनु-योगिकत्व-यद्धर्मावच्छिन्नहेत्वधिकरणाव-च्छिन्नत्वोभयाभावः तद्धर्मवत्त्वं व्याप्तिः।] तथा च धूमादिनिष्ठस्वावयवाद्यव-च्छिन्नतदधिकरणतायां हेतुताव-च्छेदकसम्बन्धेन हेतुमदवच्छिन्नत्वस्य, रूपादिनिष्ठवह्निमत्संयुक्तत्वा-द्यभावाधिकरणतायां घटादिनिष्ठधूमवत्कपालाद्यवच्छिन्नतदधिकरणतायां च हेत्वनुयोगिकत्वस्याभावेन उभयाभावसत्त्वाल्लक्षणसमन्वय इति। [अयोगोलकसंयुक्ततृणनिष्ठाधिकरणतायाम् उभयाभावसत्त्वात् तामादाय धूमवान् वह्नेः इत्यत्रातिव्याप्तिवारणया **सामान्यपदम्**। वह्निनिष्ठाधिकरणतायाम् उभयाभावासत्त्वात् नातिव्याप्तिः। ]

**तन्न**, व्याप्यवृत्तेरवच्छेदका(त्वा)नुपगमे पृथिवी रूपात् इत्यादावति-व्याप्तेः, पृथिवीत्वादिव्यभिचारिजलीयरूपादिनिष्ठसाध्यसामानाधिकरण्या-भावस्य व्याप्यवृत्तितया तदधिकरणतासामान्ये निरुक्तोभयाभावस्याक्षतत्वात्।

अथ हेत्वधिकरणावच्छिन्नत्वस्थाने अवच्छिन्नत्व-हेत्वधिकरणानव-च्छिन्नत्वोभयाभावस्यैव निवेशनीयत्वान्नायं दोषः। [तथा च हेतुता-वच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावाधिकरणतासामान्ये (1) हेत्वनु-योगिकत्व (2) अवच्छिन्नत्व-यद्धर्मावच्छिन्नहेत्वधिकरणानवच्छिन्नत्वो-भयाभाव-एतदुभयाभावः

तद्धर्मवत्त्वस्य लक्षणत्वात् न दोषः] जलरूपादिनिष्ठ-पृथिवी-समवेतत्वाभावाधिकरणतायाम् अवच्छिन्नत्वविरहेणोभयाभावसत्वात्। एवञ्च तावतैव दर्शिताप्रसिद्धेरपि निवारितत्वात् तादृशाधिकरणतावदन्यत्वमेव[1] [हेतौ] निवेशनीयं, न तूक्ताधिकरणतासामान्ये हेत्वनुयोगिकत्व-तादृशोभयाभाववत्त्वोभयाभावः, प्रयोजनविरहादिति चेत्

एवमपि वक्ष्यमाणायाः कालिकसम्बन्धेन हेतावव्याप्तेरसङ्गतिर्दुर्वारैव। तत्र कालिकसम्बन्धेनावृत्तौ गगनादावेव दर्शितोभयाभाववत्साध्यसामानाधिकरण्या-भावाधिकरणतायाः प्रसिद्धेः, अवृत्तावेव सर्वत्र तादृशाभावप्रसिद्ध्या संबन्धान्तरेण वर्तमानपर्यन्तानुधावनविरोधश्च[2]। **तस्माद्व्याप्यवृत्तेर(प्य)व-च्छेदकवत्त्वमेव ग्रन्थकारानुमतमित्यवधेयम्।**

**दीधितिः**

**व्यभिचारिणस्तु व्यभिचारनिरूपकाधिकरणे एव तादृशि तादृशाभाववत्वम्, “सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यम्” इत्यनुभवात्। न चैवं [3]विशिष्टसत्त्वेऽव्याप्तिः, विशिष्टस्यातिरिक्तत्वात्।**

द्रव्यं सत्त्वादित्यादावाशङ्कितातिव्याप्तिमुद्धरति- **व्यभिचारिणश्चेति।** **तादृशीति**। हेतुतावच्छेदकसम्बन्धेन हेतुमतीत्यर्थः। अवच्छेदकत्वं सप्तम्यर्थः। **तादृशाभाववत्त्वं** हेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वाभाववत्त्वम्। अत्र प्रमाणाकाङ्क्षायामाह- **सत्तायामिति**। तादृशप्रतीत्या

---

[1] तादृशोभयाभाववदधिकरणतावदन्यत्वमेव रा.ता.

[2] रा.ता.ना.का.



[3] **गुणकर्मान्यत्व अ.का.**

द्रव्यत्वसामानाधिकरण्य-वत्यामपि सत्तायां तदनवच्छेदकगुणाद्यवच्छेदेन तदभाववत्त्वावगाहनादिति भावः। **एवं** सत्तायां द्रव्यत्वसामानाधिकरण्याभावोपगमे। **विशिष्टसत्त्वे** गुणाद्यन्यत्वविशिष्टसत्तात्वाद्यवच्छिन्ने। **अव्याप्तिरिति** गुणाद्यवच्छेदेन साध्यसामानाधिकरण्याभाववति केनापि रूपेण तदनधिकरणत्वासम्भवादिति भावः। **विशिष्टस्येति**। तथा च विशिष्टसत्त्वं द्रव्यमात्रवृत्ति, तदधिकरणत्वं न गुणादेरिति न हेत्वधिकरणावच्छेदेन हेतौ साध्यसामानाधिकरण्याभाववत्त्वमिति नाव्याप्तिरिति भावः।

यद्यपि हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छिन्नत्वं निवेश्यापि इयमव्याप्तिः शक्यते वारयितुं, तथापि प्रकारान्तरेणाव्याप्तिवारणसम्भवे लक्षणेऽधिकनिवेशनमनुचितमित्यभिप्रेत्य विशिष्टस्यातिरिक्तत्वपक्ष आश्रितः।

न च हेतुतावच्छेदकविशिष्टाधिकरणतानिवेशनमावश्यकम्, अन्यथा "इदं स्पर्शवद् भूतत्वमूर्तत्वोभयस्मात्" इत्यादौ भूतत्वे मूर्तत्वे च हेतौ स्वाधिकरणे गगने मनसि च साध्यसामानाधिकरण्यविरहेणाव्याप्तिप्रसङ्गादिति वाच्यम्। **उभयत्वस्यैकविशिष्टापरत्वरूपतामत**मवलम्ब्य विशिष्टस्यातिरिक्तत्वेन, तत्र स्वावच्छिन्ननिरूपिताधिकरणत्वरूपपरम्परासम्बन्धेनोभयत्वस्यैव हेतुत्वमिति स्वीकृत्यैव वा तत्राव्याप्तेः समाधानसम्भवात्।

## विशिष्टस्यातिरिक्तत्वे बाधकम्

ननु "द्रव्यं गुणाद्यन्यत्वे सति सत्त्वात्" इत्यादौ विशिष्टस्यातिरिक्ततापक्षमवलम्ब्याव्याप्तेर्वारणं न विचारसहम्। तथाहि- गुणादिवृत्तिसत्त्वादितो गुणाद्यन्यत्वविशिष्टसत्तादेरतिरिक्तत्वे अनुगत-धर्ममात्रोच्छेदः,

एकव्यक्तिवृत्तित्वविशिष्टस्यापरव्यक्तिवृत्त्यन्यत्वात्। न च तत्तद्व्यक्तिवृत्तित्वविशिष्टसत्तादीनां मिथो भेदेऽपि शुद्धसत्तादिकमनुगतं निराबाधमेवेति वाच्यम्, शुद्धसत्त्वादौ तत्तद्व्यक्तिवृत्तित्ववैशिष्ट्याभ्युपगमे भवतां तदेकत्वासम्भवात्, तदनभ्युपगमे तस्यावृत्तित्वप्रसङ्गात्।

एवं सर्वेषामेव वस्तूनां तत्तत्क्षणवृत्तित्वरूपविशेषणभेदाद्भेदप्रसक्त्या क्षणभङ्गापत्तिपर्यवसानं दुर्वारमेव।

अथ प्रत्यभिज्ञानाद्यनुरोधेन एकस्मिन्नानादेश-कालवृत्तित्ववैशिष्ट्यं स्वीक्रियते एव। परन्तु "गुणे द्रव्यवृत्तित्वविशिष्टसत्ता नास्ति" "इदानीं पूर्वक्षणवृत्तित्वविशिष्टघटो नास्ति" इति प्रतीत्यनुरोधेन मिथो भिन्ना अपि तत्तद्विशेषणविशिष्टसत्त्व-घटादयः स्वीक्रियन्ते, तदवलम्बेनैव तादृशप्रतीत्युप-पत्तेर्द्रव्यवृत्तित्वादिवैशिष्ट्यपुरस्कारेण चानुगतसत्त्वादेर्न द्रव्यत्वानुमापकता स्वीक्रियते, अपि तु तदन्य-तादृशविशेषणविशिष्टगुणाद्यवृत्तिवस्तुन एवेति तत्र द्रव्यत्वादिव्याप्तिविरहेऽपि न क्षतिरिति चेत्,

तादृशवस्तूनां केन रूपेण व्याप्यता? न द्रव्यवृत्तित्वादिविशिष्टत्वेन, तादृशरूपस्याव्याप्यानुगतधर्मसाधारण्यात्। नापि तादृशविशेषणविशिष्ट-तत्तद्व्यक्तित्वादिना, तादृशविशेषणवैशिष्ट्यांशस्य व्यर्थत्वात्, तद्व्यक्तित्वानुपस्थितावनुमानानिर्वाहाच्च।

एवं विशिष्टसत्ता नास्तीत्यत्र विशिष्टसत्तात्वावच्छिन्नाभावस्य न विधेयतासम्भवः, तद्रूपावलीढानुगतसत्तावति तद्रूपावच्छिन्नाभावासम्भवात्। नापि तत्तद्व्यक्तित्वावच्छिन्नाभावस्य, तत्तद्व्यक्तित्वस्य प्रतियोगिकोटौ अनुल्लेखात्।

[ननु] विशेषणावच्छिन्नप्रतियोगिकः संबन्धो विलक्षणः, स च नानुगतसत्तायाः संबन्धः, अपि तु तदतिरिक्त[1]विशिष्टसत्ताया एवेति प्रतियोगितावच्छेदकधर्मस्य गुणादिवृत्तिसत्तासाधारण्येऽपि तत्र विशिष्टाभावोऽक्षत एव, प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिक-सम्बन्धशून्यत्वमात्रस्य विशिष्टभावसत्वेऽपेक्षितत्वादिति चेत्,

तर्हि गुणादिसाधारणसत्ताया एव तादृशातिरिक्तसम्बन्धः गुणादिव्यावृत्तः क्रियतां किं सम्बन्धान्तरकल्पनेनेत्यभिप्रेत्याह- **अनतिरिक्तत्वे त्विति**।

**दीधितिः**

**अनतिरिक्तत्वे तु विशेषणविशेष्यसम्बन्धस्यैव परम्परया व्याप्तत्वात्।**

**विशेषणविशेष्यसम्बन्धस्यैवेति**। सत्त्वादिनिष्ठगुणाद्यन्यत्ववैशिष्ट्यस्यैव इत्यर्थः। **पेरम्परया**' परम्परासम्बन्धेन, स्वावच्छिन्ननिरूपितसमवायादि-सम्बन्धेनेति यावत्। **व्याप्तत्वादिति**। गुणाद्यन्यत्त्ववैशिष्ट्यावच्छिन्नाधि-करणतायाः गुणादावसत्त्वात्, तादृशसम्बन्धेन तद्वैशिष्ट्यस्य द्रव्यमात्रवृत्तित्वादिति भावः। एवकारेण सत्ताया व्याप्यत्वव्यवच्छेदः। यत्र विशेषणवैशिष्ट्यावच्छिन्नसत्ताहेतुकद्रव्यत्वाद्यनुमितिरभिमता, तत्र तद्वैशिष्ट्य-हेतुकानुमितिरेवोपेयते, वैशिष्ट्ये परम्परासम्बन्धेन व्याप्तिधीविरहे चानुमितिरसिद्धैवेति भावः।

यद्यपि विशिष्टनिरूपितसम्बन्धस्य विलक्षणत्वे तादृशसम्बन्धेन सत्ताया अपि व्याप्यत्वं निर्वहति, तथापि विशेषणावच्छिन्ननिरूपितसमवायत्वादिना न सत्तादिसम्बन्धता, किं



[1] विशेषणवत्वतिरिक्त अ.का.

तु विशिष्टसत्तावानिति प्रत्यये वैशिष्ट्यस्यैव सत्तादि-विशेषणतापन्नस्योक्तपरम्परासम्बन्धेन धर्मिणि विशेषणत्वोपगमात् नातिप्रसङ्गशङ्केत्याशयेनेदमभिहितम्।

नन्वेवं रीत्या प्रथमलक्षणपरिष्कारे वक्ष्यमाणकेवलान्वयिसाध्यका-व्याप्त्यसङ्गतिः, तत्रापि सम्बन्धान्तरेण हेतुमद्वृत्तौ हेत्वधिकरणावच्छिन्न-साध्यसामानाधिकरण्याभावप्रसिद्ध्या लक्षणगमनसम्भवादत आह- **केवलान्वयिनीति।**

**दीधितिः**

**केवलन्वयिनि चाव्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणेत्याहुः।**

**द्वितीयलक्षणेति**। न च **तेच**' इत्यनेनोभयत्वावच्छिन्नस्यैव परामर्शात्प्रथमलक्षणेऽव्याप्त्यभावेऽसङ्गतिदुर्वारैवेति वाच्यम्। केवलान्वयि-साध्यके धूमे चाव्याप्तिप्रदर्शनात् उभयत्वेनोपस्थितेऽपि[1] लक्षणद्वये यथायोगं तत्तत्स्थलेऽव्याप्त्यन्वये तात्पर्यात्।

यद्यपि धूमादावपि साध्यसामानाधिकरण्यसामान्याभावघटितस्य प्रथमलक्षणार्थस्य नाव्याप्त्यवकाशः, तथापि यत्किञ्चित्साध्यवद्व्यक्ति-भेदनिवेशाभिप्रायेण द्वितीयलक्षणस्येव, यत्किंचित्साध्यसामानाधिकरण्याभाव-निवेशाभिप्रायेणैव प्रथमलक्षणस्यापि नानाव्याक्तिसाध्यकेऽव्याप्तिप्रदर्शन-मविरुद्धम्।

मूले च **येत्किञ्चित्साध्यानधिकरणाधिकरणे**' इत्युपलक्षणं, "यत्किञ्चित्साध्याधिकरणावृत्तौ" इत्यपि बोध्यम्, तेन प्रथमलक्षणाव्याप्ति-सम्पादकहेत्वकथनान्न्यूनत्वस्य नावकाश इति ध्येयम्।



[1] तदुभयत्वेनोपस्थितप्रथमलक्षणे अव्याप्त्यसंभवेपि रा.ता.

सामानाधिकरण्यस्याव्याप्यवृत्तितायां प्रमाणसिद्धायामेव दर्शितातिव्याप्तिर्वारयितुं शक्यते, तत्रैव न प्रमाणम्, उक्तप्रतीतेरन्यविषयकत्वादित्याह- **सत्तायामिति।**

**सार्वभौमलक्षणदूषणम्**

**दीधितिः**

**तच्चिन्त्यम्। "सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यम्" इति प्रतीतिर्हि "द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यम्" इति प्रतीतिवत् सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वस्य, [स्वाश्रयाश्रयत्वरूप]-परम्परासंबन्धेन सामानाधिकरण्यस्य वाऽभावं गुणेऽवगाहते, न तु सत्तायामेव द्रव्यवृत्तित्वाभावम्[1], "सत्ता न द्रव्यवृत्तित्वाभाववती" "द्रव्यवृत्तित्वाभावो न सत्तावृत्तिः" इत्यादिसर्वजनसिद्धप्रतीतिबाधितत्वात्। बाधकाभावात्तु संयोगतदभावयोरवच्छेदकभेदेनैव[2] प्रतीत्या तदुभयोरेकत्र सिद्धिः।**

**प्रतीतिर्हीति** अभावं गुणेऽवगाहते इत्यनेनान्वयः। **अवच्छेदकत्वस्येति** निरूपकत्वस्येत्यर्थः। तेन सामानाधिकरण्यस्य व्याप्यवृत्तितामते तदवच्छेदकत्वस्याप्रमाणिकत्वेऽपि न क्षतिः।

उक्ताकारप्रतीतावच्छेदकत्वानुल्लेखादवच्छेदकत्वाभावाव गाहिता न सम्भवतीत्याशङ्क्याह- **परम्परेति**। ननूक्तपरम्परासम्बन्धो न वृत्तिनियामकः, "आकाशं द्रव्यत्वसामानाधिकरण्यवत्"

---

[1] इदं न समीचीनम्। उपरि ग्रीष्मतप्तस्य अधश्च जलनिमग्नस्य ऊर्ध्वशरीरे सुखाभाववत् एकस्यामेव सत्तायां द्रव्यत्वसामानाधिकरण्य-तदभावसंभवात्।



[2] रा.ता. भेदेनैकत्र का.

इत्यप्रत्ययादिति उक्तसम्बन्धाव-च्छिन्नाभाव एवाप्रामाणिक इति तादृशाभावावलम्बनतापि नोक्तप्रतीतेः सम्भवति इत्याशङ्कोद्धारायानुरूपं दृष्टान्तमाह- **द्रव्यत्व इति**। गुणस्यावच्छेदकतानियामकद्रव्यत्वसम्बन्धशून्यतया द्रव्यत्वनिष्ठाभावावच्छेदकत्वं न सम्भवतीत्यगत्या गुणनिष्ठो द्रव्यत्ववृत्तिपृथिवीत्वसामानाधि-करण्यावच्छेदकत्वस्य, परम्परासम्बन्धेन तादृशसामानाधिकरण्यस्याभाव एव वा तादृशप्रतीतिविषय इत्यवश्यमुपेयं, तद्वदत्रापीत्यर्थः।

स्वरसतो यादृशशब्दाद्यादृशोऽर्थः प्रतीयते तादृशशब्दोल्लखिततत्प्रत्यये तादृशार्थविषयकत्वमेवासति बाधके युज्यते इत्याशयेन दर्शितप्रतीतेः सत्तायां गुणावच्छिन्न-द्रव्यवृत्तित्वाभावावगाहितायां बाधकप्रतीतिमाह- **सत्ता न द्रव्यवृत्तित्वाभाववतीति**। न च द्रव्यवृत्तित्वाभावाभावस्य द्रव्यवृत्तित्वरूपस्य सत्तायामस्मन्मतेऽपि सत्त्वान्नैतस्याः प्रतीतेर्बाधकत्वं सम्भवति, विरोध्यविषयकत्वादिति वाच्यम्। तादृशशब्देन द्रव्यवृत्तित्वाभाववद्भेदस्यैव प्रत्यायनात्, तदाकारप्रतीतेरपि तद्भेदावगाहितया बाधकत्वात्। भेदस्याव्याप्यवृत्तिताविरहेण सामानाधिकरण्याभाववद्भेदस्य तदभावविरोधित्वात्।

यदि च भेदस्याव्याप्यवृत्तित्वमतमवलम्ब्य तादृशप्रतीत्यो(ते)र्विरोध्य-विषयकत्वमुपपाद्यते, तदा सत्तायां द्रव्यत्वसामानाधिकरण्याभावेऽपि तदधिकरणभिन्नत्व-स्याक्षततयाऽतिव्याप्तिवारणमशक्यमिति भावः।

अव्याप्यवृत्तित्वसाधकदर्शितप्रतीतेरभावरूपविशेष्ये सत्तावृत्तित्वाव-गाहिताया उपगमात् तत्राभावविशेष्यक-सत्तावृत्तित्वविरोधिविषयकप्रत्ययं बाधकतयोपन्यस्यति- **द्रव्यवृत्तित्वाभाव इति**।

यद्यपि द्रव्यवत्तित्वाभावे सत्तावृत्तित्वं गुणाद्यवच्छेदेन, नतु द्रव्यावच्छेदेनेति तदवच्छेदेन तत्र [द्रव्यवृत्तित्वाभावे] सत्तावृत्तित्वाभावः सम्भवति। एवं सत्तावृत्तित्वं सत्तात्वसामानाधिकरण्यरूपं सामाना-धिकरण्यस्याव्याप्य-वृत्तितामतेऽव्याप्यवृत्तीति तदनवच्छेदकगुणत्वाद्यवच्छेदेन द्रव्यवृत्तित्वाभावे तदभावः सम्भवत्येवेति न विरोधः, तथाप्युक्तयुक्त्या दर्शितप्रतीतेः सत्तावृत्तिभेदावगाहितया बाधकत्वं दुर्वारमेव।

यत्तु सत्तावृत्तावभावेऽवच्छेदकभेदेन सत्तावृत्तित्वाभावसम्भवेऽपि अवच्छेदकाप्रतीतिदशायां जायमानतत्प्रत्ययस्य सत्तावृत्तित्वग्रहप्रतिबन्धकतया तदुत्तरं जायमानायाः "सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यम्" इतिप्रतीतेः सामानाधिकरण्याभावे सत्तावृत्तित्वावगाहित्वासम्भवेन गुणनिष्ठसामानाधि-करण्यावच्छेदकत्वाभाववगाहित्वे सर्वत्रैव तदवगाहित्वकल्पनमुचितमिति भाववर्णनम्,

तदसत्। एवं सत्यवच्छेदकाविषयिण्याः द्रव्यत्वसामानाधिकरण्यत्वेन सत्तायां तत्सामानाधिकरण्य-विषयकप्रतीतेरपि बाधकतासम्भवेन 'सत्ता न द्रव्यवृत्तित्वाभाववती' इत्यादिप्रतीतिपर्यन्तानुधावनस्य निर्बीजतापातात्।

नन्वेवं संयोगादिमति संयोगादेरप्यभावो मा सैत्सीत्, "मूले न कपिसंयोगः" इत्यादिप्रतीतेरपि मूलनिष्ठकपिसंयोगाद्य-वच्छेदकत्वाभावावलम्बनतया उपपत्तेरित्यत आह- **बाधकाभावादिति।** तत्र "कपिसंयोगाभावो वृक्षावृत्तिः" इत्यादिप्रत्ययस्याननुभवादिति भावः।

ननु संयोगाभावे वृक्षावृत्तित्वप्रत्यये इव द्रव्यवृत्तित्वाभावे सत्ताऽवृत्तित्वप्रत्ययेऽपि विवादसम्भवाद्यत्र सामानाधिकरण्याभावस्य न

प्रत्यक्षसम्भवस्तत्र तत्सत्त्वे मानाभावेन तदनधिकरणत्वं निष्प्रत्यूहमिति अतिव्याप्तिरित्याह- **अतीन्द्रियसाध्यक इति।**

## दीधितिः

**अतीन्द्रियसाध्यकेऽतीन्द्रिये व्यभिचारिण्यतिप्रसङ्गाच्च, तत्र सामानाधिकरण्याभावस्य प्रत्यक्षत्वासम्भवेनासिद्धेः। न च तदभाववद्वृत्तित्वेन तत्र तदनुमेयम्, तद्वद्वृत्तिभिन्नत्वस्योपाधित्वात्।**

"इदं गुरु द्रव्यत्वात्", "पृथिवी आकाशाभावात्"[1] इत्यादावित्यर्थः।

अथवा स्तम्भादौ पिशाचत्वाभावस्येव स्तम्भत्वादौ पिशाचत्व-सामानाधिकरण्याभावस्य, महति वाय्वादौ रूपाभावस्येव महावायुत्वादौ रूपसामानाधिकरण्याभावस्यापि प्रत्यक्षत्वादुभयत्रातीन्द्रियत्वोपादानम्।

**तत्रेति।** गुरुत्वादिसाध्यकस्थले साध्यसामानाधिकरण्याभावस्यातीन्द्रिय-प्रतियोगिकत्वेनातीन्द्रियतयाऽतीन्द्रियहेतुकस्थले च धर्मिण एव तथात्वेन हेतौ साध्यसामानाधिकरण्याभावस्य प्रत्यक्षासम्भवेन तत्र तदसिद्धेरित्यर्थः। **'तदभाववद्वृत्तित्वेन'** गुरुत्वाभाववद्वृत्तित्वेन। **'तत्र'** द्रव्यत्वादौ। **'तत्'** गुरुत्वादिमद्वृत्तित्त्वाभाववत्वम्। **अनुमेयमिति।** तद्विरुद्धदृष्टान्तेनेत्यादिः। **तद्वदिति।** गुरुत्वादिमदित्यर्थः। **उपाधित्वादिति।** तद्विरुद्धदृष्टान्ते तद्वद्वृत्तिभिन्नत्वस्य साध्यव्यापकतायाः, पक्षीभूते प्रकृतहेतौ च भेदस्य व्याप्यवृत्तित्वेन साधनाव्यापकतायाः सुग्रहत्वात्, पक्षे साध्यसन्देहेन पक्षावृत्तितादृशोपाधौ साध्यव्यापकत्वनिश्चयासम्भवेऽपि

---



[1] गुरुत्वात् रा.ता.

सन्दिग्धोपाधित्वस्य दुर्वारत्वादनुकूलतर्कविरहेण सन्दिग्धोपाधेरपि दूषकत्वादिति भावः[1]।

नन्वेवमतीन्द्रियसंयोगादेरप्यवृत्तित्वं न स्यात्, तद्वति तदभावस्य प्रत्यक्षासम्भवेनासिद्धेरनुमानस्याप्रयोजकत्वात्। एवं सामानाधिकरण्यस्य अव्याप्यवृत्तितामाश्रित्य मणिकृतैव सिद्धान्तलक्षणे हेतुसमानाधिकरणाभावे प्रतियोगिसामानाधिकरण्याभावस्य विशेषणताकल्पे "कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरणः" इति ग्रन्थेनाव्याप्यवृत्तिसाध्यकव्यभिचारिणि अतिव्याप्तिरुद्धृता। तथा च तन्मते युक्तिर्भवतु मा वा, उभयथापि तदाश्रित्य पूर्वपक्षलक्षणं व्याचक्षाणो नापराध्यतीत्याशङ्क्य दूषणान्तरमाह- **किंचेति।**

**दीधितिः**

**किञ्च इदमिदानीम् इतिप्रतीतिनियामकविशेषणताविशेषेण हेतुतायां [कालत्ववान् घटात् इति] सद्धेतावव्याप्तिः। तेन सम्बन्धेनाधिकरणे काले तेन सम्बन्धेन साध्यवद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः।**

**इदमिदानीमिति**। कालिकविशेषणतात्मकविलक्षणसम्बन्धेनेत्यर्थः। अभावादेः इह इतिप्रत्ययनियामको यो दैशिकविशेषणताविशेषस्तत्र तादृश-

---

[1] पक्षे साध्यसन्देहेन पक्षावृत्तितादृशोपाधौ सन्दिग्धोपाधेः दुर्वारत्वात्, अनुकूलतर्कविरहेण साध्यव्यापकत्वनिश्चयासम्भवेऽपि सन्दिग्धोपाधेरपि दूषकत्वादिति भावः। रा.ता.

सम्बन्धवैलक्षण्यस्य प्रामाणिकतालाभाय विलक्षणप्रतीतिनियामकत्वाभिधानम्।

न च "इदानीम्" इतिप्रतीतौ सम्बन्धवैलक्षण्याभावेऽपि कालत्वेनाधिकरणावगाहनात् "इह" इतिप्रत्ययात्तस्य वैलक्षण्यमुपपद्यते इति किं सम्बन्धवैलक्षण्येनेति वाच्यम्। सम्बन्धविशेषानुयोगित्वादन्यस्य कालत्वस्य दुर्वचत्वात्, "इदानीं कालत्वाभावः" इत्यादिप्रतीत्या काले कालत्वाभाववृत्तेः प्रामाणिकत्वेऽपि[1] "काले कालत्वं नास्ति" इति प्रतीत्यनुदयात् "नास्ति" इत्याकारकप्रतीतौ कालिकसम्बन्ध-व्यावर्त्तकरूपावाच्छिन्नाया एव विशेषणताया नियामकत्वस्यावश्यकत्वात् दैशिक-कालिकसम्बन्धसाधारण-सम्बन्धताव-च्छेदकस्याप्रामाणिकतया कालिकसम्बन्धे सम्बन्धतावच्छेदकीभूतस्य वैलक्षण्यस्य सिद्धेर्निष्प्रत्यूहत्वाच्च।

**सद्धेताविति**। कालत्वादिसाध्यकघटादिहेतावित्यर्थः। **काल इति**। कालावच्छेदेन इत्यर्थः। **अप्रसिद्धेरिति**। वृत्तिमतः कालावच्छेदेन कालत्वादिसामानाधिकरण्यवत्त्वात् अवृत्तिनिष्ठतदभावस्य च कालानव-च्छिन्नत्वादच्छेद्याधिकरणासम्बन्धिनोऽनवच्छेदकत्वात्।

अथ हेत्वधिकरणमहाकालावच्छेदेन महाकाल एव कालवृत्तित्वाभावः प्रसिध्यति, महाकालस्य गगनादिवदवृत्तितया तत्र कालवृत्तित्वासत्त्वात्, स्वस्य तादात्म्यसम्बन्धेन स्वसंबन्धितया स्वनिष्ठाभावावच्छेदकत्वसंभवाच्च। न च तादात्म्यसम्बन्धो नावच्छेदकतानियामको, "रूपे पर्वते न वह्निमत्संयुक्तत्वम्" इतिप्रतीतिवत् "स्वस्मिन् रूपे न वह्निमत्संयुक्तत्वम्" इत्यादिप्रतीतेः सविवादत्वादिति वाच्यम्। तथा सति तादात्म्यसम्बन्धेन



[1] इदं सर्वथा अप्रामाणिकमेवेति बोध्यम्।

व्यभिचारिणि, तदतिरिक्तसम्बन्धेन स्वासम्बद्धे हेतौ तेन सम्बन्धेन हेतुमत्स्वावच्छेदेन साध्यासमानाधिकरण्यवत्त्वविरहादतिव्याप्तेः स्फुटतया तद्दोषोपेक्षाया अनुचितत्वापातात् इति चेत्-

**अत्र केचित्** कालिकसम्बन्धेन गगनादेरपि वृत्तिमत्त्वमताभिप्रायकोऽयं ग्रन्थः। तथा च कालावच्छेदेन महाकालेऽपि कालिकसम्बन्धेन साध्यवद्वृत्तित्वसत्त्वात् तद्विरहिणोऽप्रसिद्धिर्न विरुध्यत इति वदन्ति।

वस्तुतस्तु स्वस्मिन् सामानाधिकरण्य-तदभावयोर्वृत्तावच्छेदकत्वे स्वाधिकरणत्वमेव नियामकं, न तु सम्बन्धितामात्रं, स्वाधिकरणावच्छेदेनैव स्वस्मिन् तत्प्रतीतेरनुभवसिद्धत्वात्, अत एव 'सम्बन्धान्तरेण सम्बद्धे' इत्युपेक्ष्य '**सम्बन्धान्तरेण वर्तमाने**' इत्यभिहितम्।

न च तादात्म्यादिवृत्त्यनियामकसम्बन्धेन व्यभिचारण्यतिव्याप्त्यकथनात् न्यूनता दुर्वारैवेति वाच्यम्। तादृशसम्बन्धेन साध्यवद्वृत्तित्वस्य हेत्वधिकरणत्वस्य चाप्रसिद्ध्या अतिव्याप्त्यसम्भवात्।

न च तेन सम्बन्धेन सद्धेतौ लक्षणसंगमनाय वृत्तेरधिकरणतायाश्च स्थाने सम्बन्धप्रतियोगित्व-अनुयोगित्वयोरेव निवेशनीयत्वात् अतिव्याप्तेरावश्यकतेति वाच्यम्। प्राचां मते तेन सम्बन्धेन व्याप्त्यनभ्युपगमसम्भवेन वृत्त्यादेरपि निवेशसम्भव इत्यभिप्रायेणैवातिव्याप्त्यनुद्भावनात्।

एतेन-

हेत्वधिकरणखण्डकालविशेषावच्छेदेन कालिकसम्बन्धेन तदवृत्तौ तद्विषयकज्ञान एव साध्यासामानाधिकरण्यप्रसिद्धिः सम्भवति। न चैवमपि "कालत्ववान् सर्वस्मात्" इत्यादौ खण्डकालस्य हेत्वनधिकरणतया हेत्वधिकरणावच्छिन्न-साध्यासामानाधिकरण्याप्रसिद्धिर्दुर्वारैवेति वाच्यम्।

हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतापर्यन्तानिवेशे(न) वैशिष्ट्यव्यासज्य-वृत्तिधर्मावच्छिन्नस्य यत्र हेतुत्वमभिहितं तत्र तादृशधर्मस्यैव (ए)तन्मते स्वावच्छिन्ननिरूपिताधिकरणत्व-रूपपरम्परासम्बन्धेन हेतुत्वस्यानुमततयोक्तस्थले सर्वत्वस्यैव तादृशसम्बन्धेन हेतुतया तादृशसम्बन्धेनावृत्तौ कालिकसम्बन्धेन कालवृत्तौ गगनादावेव तादृशसम्बन्धेन साध्यवद्वृत्तित्वाभावस्य हेत्वधिकरणकालावच्छेदेन प्रसिद्धेः

इति निरस्तम्। तादृशकाले तज्ज्ञानस्य विषयतासंबन्धसत्त्वेपि तादृशसंबन्धस्य वृत्तिनियामकत्वानभ्युपगमेन तज्ज्ञानस्य तत्कालीनताविरहेण च तस्य तज्ज्ञानानधिकरणत्वात्, तज्ज्ञानेऽभावृत्तौ तत्कालस्यानवच्छेदकत्वात्।

महाकालानुयोगिकविशेषणताविशेषेण घटादिहेतुक-स्थलाभिप्रायकोऽयं ग्रन्थः, तादृशसम्बन्धेन हेतुमत्तायाः खण्डकालेऽभावान्नोक्तदिशा अप्रसिद्धिरित्यपि केचित्।

अत्र स्वनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावानव-च्छेदकतादृशसम्बन्धावच्छिन्नस्वाधिकरणतावत्सामान्यकत्वं विवक्षणीयमिति नोक्ताव्याप्त्यवकाशः। स्वावयवपरमाण्ववच्छेदेन घटादौ वर्तमाने कालत्वादिसामानाधिकरण्याभावे तदधिकरणकाल-सामान्यस्यानवच्छेदकतया तत्र लक्षणसमन्वयसम्भवात्, केवलान्वयिसाध्यके मेयत्वादौ सर्वाधिकरणावच्छेदेनैव हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वसत्त्वात् स्वनिष्ठ[1]तदभावा-प्रसिद्ध्याऽव्याप्तिर्न क्षतिमावहति, मूलकृतैव तत्राव्याप्तेः वक्ष्यमाणत्वात्।



[1] तन्निष्ठ रा.ता.

यदि चैवम् आत्मभिन्नं ज्ञानवदन्यत्वात् इत्यादौ हेतोरात्मान्यसकलवस्त्ववच्छेदेनैव दैशिकविशेषणतया साध्यवद्वृत्तित्वात्, आत्मनश्च केनापि सम्बन्धेन हेतुमत्त्वाभावात्तदवच्छेदेन हेतौ साध्यसामानाधिकरण्याभाववृत्त्यसम्भवात् हेतुनिष्ठतादृशाभावाप्रसिद्ध्या अव्याप्तिरिति विभाव्यते,

तदा **हेतुतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तदवच्छेदेन स्वस्मिन् वर्तते योऽभावस्तत्प्रतियोगितानवच्छेदकतादृशसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वत्वकत्वं व्याप्ति**रित्येव विवक्षणीयम्। "कालत्ववान् घटात्" इत्यादौ (कालावच्छेदेन) घटादौ वर्तमानः कालसमवेतत्वाद्यभाव एव प्रसिद्धः, तत्प्रतियोगितानवच्छेदकं च कालिकसंबन्धावच्छिन्नकालवृत्तित्वत्वादिकमिति लक्षणसमन्वयः।

(हेतुमति) हेतुतावच्छेदकसम्बन्धेन यद्वृत्तिमत् तन्निष्ठ[1]तत्सम्बन्धाव-च्छिन्नसाध्यवद्वृत्तित्वाभावा-नवच्छेदक[2]तत्सम्बन्धावच्छिन्नतद्वस्तु-प्रकृतहेतूभया-धिकरणतावत्सामान्यकत्वं वा वक्तव्यम्। "आत्मभिन्नं ज्ञानवदन्यत्वात्" इत्यादावात्माद्यवच्छेदेन घटत्वाभावादिनिष्ठस्यात्मान्यवृत्तित्वाभावस्यानवच्छेदकं घटत्वाभाव-ज्ञानवदन्यत्वोभयाधिकरणतावत्सामान्यमिति लक्षणसमन्वयः। उभयाधिकरणत्वनिवेशात् "वह्निमान् धूमात्" इत्यादौ धूमादिसंयोगिनः कपालादेर्घटादिनिष्ठवह्नि-

[1] हेत्वधिकरणस्येदं विशेषणम्



[2] साध्यवद्वृत्तित्वाभावस्य विशेषणम्

मत्संयुक्तत्वाभावावच्छेदकत्वेऽपि न क्षतिः, कपालादेः संयोगेन घटानधिकरणताया उक्तोभयाधिकरणतावत्सामान्यानन्तर्गतत्वात्।

अथवा **हेतुतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तदवच्छिन्न-स्ववृत्तिकान्यहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावकत्व**विवक्षणान्न कश्चिद्दोषः। सर्वत्र सद्धेतावन्ततः अवृत्तौ प्रसिद्धे साध्यसामानाधिकरण्याभाव एव तादृशस्ववृत्तिकान्यत्वसत्त्वेन लक्षणसमन्वयात्।

वह्न्यादिनिष्ठधूमादिसामानाधिकरण्याभावे अयोगोलकादेरिव तद्वृत्ति-त्वस्याप्यवच्छेदकत्वात् स्वनिष्ठहेतुतावच्छेदक-सम्बन्धावच्छिन्नवृत्त्यनवच्छिन्न-हेतुतावच्छेदकसम्बन्धावच्छिन्न-सामानाधिकरण्याभावकत्वं वा विवक्षणीयम् इत्यादयः परिष्कारस्य पन्थानो द्रष्टव्याः।।

**इति महामहोपाध्यायगदाधरभट्टाचार्यचक्रवर्तिविरचिता**
**सार्वभौमलक्षणविवृत्तिः समाप्ता।।**